त्सरꣳ सोऽग्न्यैराजीर्दीर्घाः कुर्वीत । कामꣳ संवत्सरꣳ सोऽग्न्यैराजीर्दीर्घाः कुर्वीत । संवत्सरं वा भूत्वैकाह्निकं[1] कुर्वीतैकाह्निकस्त्वेवाग्निरिति[2] शालीकिः ।॥

II. 13. 7. काम्यस्यान्वाधान[3] इति ॥ जाते काम्यमन्ववदध्यादिति[4] बौधायनः ॥ पुरस्तादेवेति शालीकिः ।॥

II. 13. 18. औदुम्बरीणाꣳ समिधामभ्याधान इति ॥ सूत्रं शालीकेर्न्यो ह स्माह बौधायन एकामेव समिधं पञ्चर्चेनाभ्यादध्यात्तदेव रात्रोमꣳ स्यादिति ।॥

II. 15. 14. अश्वपतीयायै समिधोऽभ्याधान इति ॥ सूत्रꣳ शालीकेर्न्यो ह स्माह बौधायनोऽश्वपतीयां प्रतिसमेधनीयां वैष्णवीमित्येता अभ्यादध्यादिति ।॥

II. 16. 2. वात्सप्रविष्णुक्रमयोः संनिपात इति ॥ अहरहः संनिपातयेदिति बौधायन ॥ आदितस्त्वान्ततस्त्वेति शालीकिः ।॥

उक्थ्य उद्गाते प्रायश्चित्तकरण[5] इति ॥ स ह स्माह बौधा-

१ Thus G U C′ and the Ms : भूत्वैकाह्निकं B Bu ; भूत्वैकाहं Be.

२ According to the vivaraṇa of this dvaidham, given in Ms., the इति, which is missing in all the MSS., ought to be inserted before ऐकाह्निकस्त्वे° ।

३ Thus U (see m.) C′, °स्याभ्याधान the other MSS.

४ Thus B Be C′ Bu G (see m.) U (see. m.); °भ्यादध्या° G (pr. m.) and the Ms

५ प्रायश्चित्तकरण G (sec. m.) U

यतः प्रवृज्य परिदायाकाङ्क्षतिभिरभिजुहुयाद्यैतरत्कर्मावृता कुर्यादित्यु हो ह स्माह शालीकिः प्रवृज्य परिदायाकाङ्क्षति-भिरभिजुहुयान्न चेतरत्कर्मावृता कुर्यादिति ॥

I. 16. 12. प्रयाण इति ॥ स ह स्माह बौधायन उभयेन प्रयाया-दाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः ॥

[illegible] 15. अथ यद्यपर्याणा[1] अप उपाधिगच्छतीति ॥ सूचङ् शालीकेर्हो ह स्माह बौधायनो यद्येवापर्याणा अप उपाधिगच्छे-त्तद्भस्म प्रवेशयेन्न च विगर्भां तां कुर्याद्यावन्मात्रं चादाय प्रत्यवदध्यात्प्रसद्य भस्मना योनिमित्यथेतरस्थालीषु वा चतेषु वानुनिधापयेदिति ॥

17. 13 देवयजनस्याध्यवसान इति ॥ स ह स्माह बौधायन उभयेनाध्यवस्येदाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः ॥ ३ ॥

18. 11. संभाराणां निवपन इति ॥ सूचङ् शालीकेर्हो ह स्माह बौधायनो भस्म चैवोषाङ्श्च मन्त्रेण निवपेत्तूष्णीमितरौ संभाराविति ॥

II 19. 4. गार्हपत्यचिताविति ॥ सूचङ् शालीकेर्हो ह स्माह बौधायनोऽग्निग्रहणं स्वयंचितिं मेतकृष्णयोरभिमर्शनमधि-द्रवणमवद्रवणमिति[2] सर्वमेवैतत्कर्मावृता कुर्यादिति ॥

१ Thus here and infra all

२ Thus Be C and cp. XXIII. 15 ॰धिद्रवणावद्रवण इति B ॰धिद्रवणावद्रवणं इति C (see m.) Ms. ॰धिद्रवणमिति Bu G C (pr. m.).

साहस्रं चिन्वीत प्रथमं चिन्वानः पञ्चचितीकं चेति ॥ स ह स्माह बौधायनः समाप्यैतांश्चतुर्थं चिन्वानो जानुदघ्नं चात ऊर्ध्वं प्रत्याददीत पञ्चचितीकं चेत्य''थो ह स्माह शालीकिः समाप्यैतांश्चतुर्थं चिन्वानो ग्रीवदघ्नं चैवात ऊर्ध्वं प्रत्याददीतैकचितीकं चेति ' ॥

वात्सप्रविष्णुक्रमयोः संनिपात इति ॥ स ह स्माह बौधायनो यद्यह[1] वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय संनिवपेताथ यदि विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा वात्सप्रेणोपस्थाय संनिवापेन प्रक्रामेदि''त्यथो ह स्माह शालीकिर्यद्यह[1] वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय श्वो भूते संनिवपेताथ यदि विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा वात्सप्रेणोपस्थाय श्वो भूते' संनिवापेनैव प्रक्रामेदिति ' ॥

II. 20. 3. तस्यामन्यचावेक्षमाणो दधिद्रप्सान्प्रास्यत्यमुं ते शुचि दधामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधातनस्योत्तरः शालीकेः ' ॥

II. 20. 5 अथैनाꣳ सिकताभिः पूरयित्वा दध्नोपरिष्टात्संप्रच्छादयेति ॥ सूत्रं बौधायनस्य '' सिकताभिरेवैनां[2] पूरयित्वोत्तरे शाखाखण्डे निदध्यादिति शालीकिः ' ॥

१ Thus Bu F G (sec. m.) Be C; यदिह B G (pr. m.); यदि Ms.
२ °रैवैनां Bu Be C; °रेवैनाः B G F Ms.

II. 20. 7. शिक्यस्यादान इति ॥ मन्त्रेणाददीतेति बौधायनस्तूष्णीमिति शालीकिः ॥

I. 20. 15. नैर्ऋतीनामुपस्थान[1] इति ॥ कुर्वीतात्र तथादेवतमुद्दोषये[2] इति[2] बौधायनो न कुर्वीतेति शालीकिः ॥

I. 20. 17. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥

II. 21. 1. गार्हपत्यस्योपस्थान इति । सूक्तं बौधायनस्त्वाहवनीय-मेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः ॥ ४ ॥ द्वितीयः ॥

I. 21. 13. स्तम्बयजुषो हरण इति ॥ सूक्तं बौधायनस्त्वोपरवकाला-दप्यत्राग्नीध्रो हरेदिति शालीकिः ॥

II. 57. 4. आख्यातं चात्वालस्य परिलेखनम् ॥

II. 57. 7. आख्यातं लोकाग्नीध्राꣳ हरणम् ॥

II. 94. 5. आख्यातꣳ स्फ्यविघनानामुपस्थानम् ॥

I. 21. 17. कार्ष्णाजिनीनामुपमोचन इति ॥ पूर्वः कल्पो बौधायन-स्योत्तरः शालीकेः ॥

II. 22. 6. वज्रिणीनामुपधान इति ॥ सूक्तꣳ शालीकेरथो ह स्माह बौधायनो ऽग्रेण यूपावटीयꣳ शङ्कुं तिष्ठन्ननुरथिन्यं कृत्वा प्राञ्चं बाणं प्रविध्येत्तमनुद्रुत्याग्रानमुपदध्यादेवं दक्षिणत एवं पश्चादेवमुत्तरत इति ॥

१ ॰मुपधान most of the MSS.

२ Thus B G ; ॰द्दोषये इति Bu : ॰द्दोषम इति Be ॰द्दोषयाविति C (see. fn. 7. Ms ; C uncertain

II. 23. 2. ऐन्द्रिया[1] उपधाय इति ॥ सूत्रं बौधायनस्य ॥ पुच्छ ऐन्द्रीमुपदध्यादिति शालीकिः ॥

II. 23. 8. उदपात्रस्योपनिनय इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो ॥ यथोपपादमिति शालीकिः ॥

ib. दर्भस्तम्बस्योपधाय इति ॥ वाक्या समुद्र उपदधातीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 23. 10. दूर्वेष्टकाया उपधाय इति ॥ स ह स्माह बौधायनो दूर्वया वा सहोपदध्याद्दूर्वां[2] वैवेति[2] ॥ मन्त्रदूर्वैवैषा स्यादिति शालीकिः ॥

II. 23. 13. औदुम्बरं युगलाङ्गलमिति ॥ सूत्रं बौधायनस्य ॥ दार्व्यं-वृक्षमेवैनत्कुर्यादिति[3] शालीकिः ॥ पुरुषा एवैतद्युगलाङ्गलं पुरस्तादाददते ऽध्वर्युः पश्चादिति बौधायनः ॥ प्रत्यक्षमेवैत-त्संयुज्य कर्षेदिति शालीकिः ॥

II. 24. 1 कर्षण इति ॥ संप्रत्याहारं[4] कर्षेदिति बौधायन ॥ आवा-जय[5] इति शालीकिः ॥ ५ ॥

१ Thus Be G (pr. m.). ऐन्द्या Bu B G (sec. m.); ऐन्द्रियाम्° Bu

२ Thus C'; दूर्वांवैवेति B Be G. चैवेति C (sec. m.). वेति I (pr. m.).

३ Thus C' the Viv. and Ms. °हव° the other MSS — °मेवैतत्कु° G Ms., °मेवैनेकु° Be C'.

४ Thus Be C'. संप्रत्यचारं Bu G. संप्रत्ययमाचारं C. प्रत्यचारं B संप्रत्याहृत्याहृत्य the Viv.

५ Thus B G C and the Viv.; जयाजय Bu. वायाज Be C'. Meaning uncertain

23. 16. गोयुगानामनुमन्त्रण इति ॥ तत्तदेवानुमन्त्रयेदिति बौधायनः ॥ सर्वाणि सहेति शालीकिः ॥

I. 24. 10. सर्वौषधस्य वपन इति ॥ अर्धशो वपेदिति बौधायनः ॥ अपर्वेति शालीकिः ॥

I. 24. 14. इतरमितरच विपरिहरतीतरमितरच्चेति ॥ सूत्रं बौधायनस्योदगान एवैनां दिशमभिसंपादयेदिति शालीकिः यजुषा यजुर्विपरिहरेदित्यौपमन्यवः ॥

26. 8. स दर्भपुञ्जीलानि पयःप्रोक्षे ऽवधाय तैः प्रोक्षत्यग्नीभ्यो ऽग्निभ्यो जुष्टान्प्रोक्षामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 27. 5. कुम्भेष्टकानामुपधान इति ॥ सूत्रं बौधायनस्य ॥ पञ्चपञ्चैवैना[1] उपदध्यादिति[1] शालीकिः ॥

नानामन्त्रास्तु दिशो भजमाना इति ॥ तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधायनस्तामेवेष्टकां परिनिस्तिष्ठेदिति शालीकिः ॥

इष्टकागणानामुपधान इति ॥ तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधायनस्तंतमेवेष्टकागणं परिनिस्तिष्ठेदिति शालीकिः ॥

28. 8-10. अभिमर्शे ऽभिहोम इति ॥ सूत्रमाचार्ययोरन्यो ह स्माहौ-

१ Thus B G U (sec. m.): ०पुञ्चैनामुप० Bb, ०पुञ्चका उप० Bc C.

पमन्यव: पुरस्तादभिमर्शाभिहोमाभ्यां तथाहैवतस्मूदद्दोहव:[१] कुर्वीतेति ' ॥

II. 28. 15. सर्पशिरस[२] उपधान इति ॥ पूर्व: कल्पो बौधायनस्योत्तर: शालीके: ॥

II. 30. 10. औदुम्बरं चोलूखलमुसलमिति ॥ सूचं बौधायनस्य " दार्वाहवनमेवैनत्कुर्यादिति[३] शालीकि: ' ॥ ६ ॥

II. 30. 11. सर्वौषधस्यावहनन इति ॥ मन्त्रेणावहन्यादिति बौधायन" स्तूष्णीमिति शालीकि: ' ॥

II. 30. 17. उखानामुपधान इति ॥ सूचं बौधायनस्यै" कामेवोखां मन्त्रेणोपदध्यात्तूष्णीमितरे इति शालीकि: ' ॥

II. 31. 13 पशुशीर्षाणामुपधान इति ॥ मध्य उपदध्यादिति बौधायनो " ऽन्तेषु तस्य व्युदूह्योपदध्यादिति शालीकि: ' ॥

अथर्वशिरस उपधान इति ॥ पुरस्तात्सर्वतोमुखमग्रेण स्वयमातृण्णामथ सवर्णमथर्वशिर उपदध्यादिति बौधायनो " नाथर्वशिर इति शालीकि: ' ॥

II. 33. 12 सर्वतोमुखस्योपधान इति ॥ सूचं बौधायनस्यानुदिशमेव[४] गायत्रीरुपदध्यादिति शालीकि: ' ॥

१ Thus all the MSS.; •दोहवौ Ms.

२ •शिर MSS. exc. C

३ •हवर्ना॰ MSS. exc. U C' and Ms.; •मेवैन MSS. exc. U.

४ Thus Be C'' U (sec. m.) and the Viv.: the other MSS. om. एव।

15. अङ्गानामुपधान इति ॥ सूत्रं बौधायनस्य " विज्ञातेष्वेवाङ्गेष्वङ्गान्युपदध्यादिति शालीकिः ' ॥

14. 2 ऋषभस्योपधान इति ॥ सूत्रं शालीकेरन्यो ह स्माह बौधायन ईषत्प्रत्यवसृतशिरसमेनमुपदध्यादयवंभो[१] वाग्नि- मुपतिष्ठतीति[२] ।

अतीतानामिष्टकागणानामुपधान इति ॥ आधिमुपदध्यादिति[३] बौधायनश्चित्यन्त इति शालीकिः ' ॥

व्रतप्रदान इति ॥ मध्यंदिने व्रतं प्रयच्छेदिति बौधायनश्चित्यन्त इति शालीकिः ' ॥ ७ ॥ तृतीयः ॥

3. 1.१० पुरीषचितेरुपधान इति ॥ सूत्रं बौधायनस्य " पूर्वेद्युरेव पुरीषचितिं परिनिष्ठितिष्ठेदिति शालीकिः ' ॥

अश्वावभितस्तिष्ठेतां कृष्ण उत्तरः[४] श्वेतो दक्षिण[५] इति ॥ अथैताभ्यां तिष्ठद्भ्यां घासमाहारयेदिति बौधायनः " काले- काल एवैनावुदानयेयुरिति शालीकिः ' ॥

39 1 १५ वालखिल्यानामुपधान इति ॥ उपरिष्टाद्वालखिल्या उप- दध्यादिति बौधायनः " पार्श्वत इति शालीकिः ' ॥

१ Thus (प्रत्यवसृत°) U G (pr. m.) C and Ms., °प्रत्यवसन° Bu; प्रत्यवसृत° Be G (sec. m.), प्रत्यवसन° B

२ Thus G and Ms.; वाग्निमुप° or वाग्निनामुप° the other MSS.

३ Thus B G U (sec. m.), Ms and the Viv., अधि° Bu, अधि° Be C' U (pr. m.).

४ उत्तरत G C and the Viv.

५ दक्षिण B G.

II. 41. 1. सृष्टीनामायातन[1] इति ॥ अग्रेण स्वयमातृण्णामुदीचीरेना आयातयेद्दोत्तरस्मात्पक्षसंधेः सर्वतो[2] वेति[2] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 41. 5. व्युष्टीनामुपधान इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनः पुरस्तादेनाः प्रतीचीरुपदध्यात्पुरस्ताद्धि प्रतीची रात्रिर्व्युच्छतीति । ॥

II. 42. 18. तासां पुरीषवतीं मध्य उपदधातीति ॥ स ह स्माह बौधायनः पुरीषेण वा सहोपदध्यात्पुरीषं[3] वैवेति[3] । मन्त्र-पुरीषैवैषा स्यादिति शालीकिः । ॥

II. 42. 20 वैराजानामुपधान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 43. 9. याज्ञसेनीनामुपधान इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 43. 21. घृतेष्टकानामुपधान इति ॥ स ह स्माह बौधायनो घृतेन वा सहोपदध्याद्घृतेन वाभ्यज्येति ॥ मन्त्रघृता एवैताः स्युरिति शालीकिर्घृतपिण्डामेवाचोपदध्यादित्यौपमन्यवः । ॥

१ Thus C' (sec. m.), Ms., the Viv. (one copy); °मायतन the other MSS.

२ Thus Ms. and the Viv.; सर्वत इति वेति Bu B G U (pr. m.), सर्वत एवेति U (sec. m.) Be C'.

३ Thus G; °पंचेवेति B Be Bu, पंचमिवेति U, °पंचैववेति C'; °षमेववेति the Ms.

इष्टकानामावपस्थानं इति ॥ अन्तरेण ज्योतिष्मतीश्च भूतेष्टकाश्चैतदिष्टकानामावपस्थानं भवतीति ॥ स ह स्माह बौधायनः संवेशनयजुः प्रवृद्ध्यजुः प्रयाणयजुरपर्यायिणयजुः सामिधेनीराप्रीरतीताꣳस्त्वेष्टकागणानथोपदध्यादित्यथो[1] ह स्माह शालीकिर्नामेष्टकं मन्त्रमिष्टकावदापादयेदतीतानेवेष्टकागणानथोपदध्यादिति[2] ॥

15. 1. पौर्णमास्या उपधान इति ॥ सूचं बौधायनश्चोत्तर एवाꣳसे पौर्णमासीमुपदध्यादिति शालीकिः ॥

15. 6 नक्षत्रेष्टकानामुपधान इति ॥ सूचꣳ शालीकिरथो ह स्माह बौधायनः प्रतितारकं चान्येष्टका उपदध्याद्यतश्च च रोचयेदिति ॥

15. 15 सर्वतोमुखस्योपधान॰ इति ॥ सूचꣳ शालीकिरथो ह स्माह बौधायनो व्यवेतं[3] खल्विदं कृष्णस्याभिमर्शनेन[4] भवति सर्वतोमुखमुपधायाक्रूतमश्वमभिमृशेदिति ॥

1. 16. 3.14 वर्धनेष्विति ॥ सूचꣳ शालीकिरथो ह स्माह बौधायनो

१ Before अथोपदध्या॰ Bu Be C' G (pr. m.) U (sec. m.) ms. इतरेण or इतरथ here and l. 6; B G (sec. m.) and the Ms. om. these words.

२ ॰पादवेदितिता॰ some.

३ व्यवेतं Be U (sec. m.) Ms. (= व्यवहितं), व्यैतं B G, व्येतं C' व्यपोवेतं Bu.

४ ॰र्शनं the Ms.

यावन्ति वर्धनानि समाने ऽहनि संनिपतेयुः सर्वेषां पारे तथादैवतमुद्दोहमः कुर्वीतेति । ॥ ८ ॥ चतुर्थः ॥

II. 47. 9. अथ प्रोक्षणीषु हिरण्यमस्कान्प्रत्यस्यत्यूर्ध्वं[1] हिंस्रो ऽपरिमितानिति सहस्रमिति प्रोक्तं ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 48. 9. अनवद्रीयस्य होम इति ॥ सूत्रमाचार्ययोः ॥ पूर्वस्मिन्नेवाग्नीके जुहुयादिति गौतमः । ॥

II. 49. 8. नमस्कारैरुपस्थान इति ॥ स ह स्माह बौधायनः सधनुष्क एवोपतिष्ठेतोत्तरस्या एव दिश आवृत्यैतेनैव यथेतमेत्य पश्चात्प्राङ् तिष्ठन्नूर्ध्वामुपतिष्ठेतेत्यथो[2] ह स्माह शालीकिर्दस्यैव धनुरुपतिष्ठेतैतस्यै चैव दिश आवृत्यैतेनैव यथेतमेत्य पश्चात्प्राङ् तिष्ठन्नूर्ध्वामुपतिष्ठेतेति[2] । ॥

II. 49. 10. परिषिच्यमाने यजमानं वाचयतीति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनः परिषिच्यपरिषिच्यैवाग्निकुम्भं निदध्यादश्मन्स्ते क्षुदमुं ते शुगृच्छत्वित्यभिनिर्दिशेद्यं द्विष्यादिति । ॥

II. 50. 3 विकर्षण इति ॥ अर्धर्चशो विकर्षेदिति बौधायन ॥ ऋचर्चेति शालीकिः । ॥

१ वापयति instead of प्रत्यस्यति Be C'.

२ Thus (अध्वर्यम्) Be C and the Viv.; अध्वर्युम् all the other MSS. and the Ms.

52. 3. अवमार्जनार्थ आघारण इति ॥ स्रुचं बौधायनोऽग्नि-चतुरस्रामेनां आघारयेदिति शालीकिः ॥

53. 4. वैश्वानरमारुतानां मन्त्रामन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायनस्तूष्णीका इति शालीकिर्वैश्वानर एव मन्त्रवान्स्यात्तूष्णीका मारुता इत्यौपमन्यवः ॥

53. 6. आनीकवतस्य होम इति ॥ स्रुचं बौधायनोऽऽहवनीय एवानीकवतं जुहुयादिति शालीकिः ॥

54. 4. अथैनꣳ संचितमाज्यप्रोक्षणेन प्रोक्षतीति ॥ स्रुचꣳ शालीके-रंचो ह स्माह बौधायनो मन्त्रानुद्दिशं चैनं प्रोक्षन्मन्त्रा-नुक्तं चेति ॥

54. 15. इध्मस्य निधान इति ॥ स ह स्माह बौधायन उभये-नेध्मं निदध्यादाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः ॥ ९ ॥

II. 55. 1. प्राकर्षैः परिधान इति ॥ आहवनीयं परिदध्यादिति बौधायनः पुच्छमेवेति शालीकिः ॥

II. 55. 5. स्रुवाङ्गत्योः करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥

II. 55. 7. पूर्णाहुत्यै[1] करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥

II. 55. 8. १० अथ जुहूमनसा दिशो ध्यायेदिति[2] ॥ दिग्भ्यो ऽवमग्नि-

---

१ Thus Ms. only : पूर्णाहुत्योः the MSS. : पर्णाहुतिकरण the Viv

२ इति om. all exc. Ms.

मभि[1]संभराणीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

II. 56. 8. प्रवेकस्यायातन[2] इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 56. 10. तस्मिंश्चतुर उपस्तृणान आहेति ॥ सूत्रं बौधायनस्य " नोपस्तृणीतेति शालीकिः ' ॥

II. 56. 12. प्रवेकस्यानुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो " नानुप्रहरेदिति शालीकिः ' ॥

II. 56. 13. ब्रह्मौदनस्य श्रपण इति ॥ अन्वाधेयवच्छ्रपयेदिति बौधायन " एतस्मिन्नेवेति शालीकिः ' ॥

II. 56. 14. ब्रह्मौदनस्य प्राशन इति ॥ उत्तरे ओष्ठन्ते प्राश्नीयुरिति बौधायनः " पुष्कमेवाभित इति शालीकिः ' ॥

II. 57. 4. वातनामानां होम इति ॥ सूत्रं बौधायनस्य " वातमथ्याञ्जलिना जुहुयादिति शालीकिः " कृष्णाजिनपुटेन जुहुयादित्यौपमन्यवः ' ॥

II. 57. 9 शाकलानामनुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो " नानुप्रहरेदिति शालीकिः ' ॥ १० ॥ पञ्चमः ॥

II. 57. 12. अग्निधिष्ण्यानामुपधान इति ॥ सूत्रं बौधायनस्य " सर्वा एव याजुषीरुपदध्यादिति शालीकिः ' ॥

१ The two akṣaras सम effaced in G.

२ ०यतन MSS. exc. Be C'.

58. 2. नानाबीजानां निर्वपण इति ॥ निर्वपणेनानुसमेत्य[1] अभिमृशेदिति[2] बौधायनस्तदेव हविः परिमिश्लिष्टेदिति शालीकिः । ॥

तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोप्यन्ते यवानिति ॥ सूत्रङ् शालीकेरन्यो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत[2] स्यादिति । ॥

आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनये-दिति बौधायनो ऽग्रेणातिहायेति शालीकिरग्रेण वा जघ-नेन वेत्यौपमन्यवः । ॥

सपत्नपशुपुरोडाशा[3] एवैतरेषाङ् हविषामिडा भवेद्-भ्यधादिति[4] । सपशुपुरोडाशानां वेति ॥ पूर्वः कल्पो बौधा-यनस्योत्तरः शालीकेः । ॥

58. 7. प्रत्याक्रमण इति ॥ सूत्रं बौधायनस्य यद् विहृतता-त्याक्रामेदिति[5] शालीकिः । ॥

60. 10. अभिषेक इति ॥ सूत्रमाचार्ययोरन्यो ह स्माहौपमन्यवः

१ °समेत्याभिमृशेदिति U (sec. m.).

२ Thus G (sec. m.) Bu Be C′ Ms; °कृत B G (pr. m.) U; cp. XXI. 4: 75. 7, XXI. 16: 99. 16.

३ °पशु° om. B G U (pr. m.) the Viv.— °डाश B Bu G U (pr. m.) the Viv.; °डाशा Be C′ U (sec. m.).

४ Thus (and cp. II. 71. 5) B G B; °द्यर्धादिति Be C′ °द्यधादिति Bu.

५ Thus U (pr. m.) C′, the Viv.; विहृतमत्या° the other MSS.

पुरस्तात्तिष्ठन्तो यावदाप्तेनाभिषिञ्चेयाच कृष्णाजिनं न रुक्मौ[१] न पार्श्वानि भवन्ति कुम्भानेव सꣳस्तीर्य तेष्वेनमभिषिञ्चेदिति ' ॥

II. 58. 18; 59. 8. योगे विमोक इति ॥ अन्तरतो युञ्ज्यादन्तरतो विमुञ्चेदिति बौधायनो " ऽन्तरतो युञ्ज्यादन्ते विमुञ्चेदिति शालीकिर्" आदित एव युञ्ज्यादन्ते विमुञ्चेदित्यौपमन्यवः ' ॥

II. 59. 11. क्रतुकरण इति ॥ सूत्रं बौधायनस्य " यथाक्रत्वेवास्य क्रतुकरणानि कुर्यादिति शालीकिः ' ॥

II. 59. 13. ऐकादशिनानां[२] पशूनामुपाकरण इति ॥ सूत्रं बौधायनस्यै"कयूप एवैकादशिनान्पशूनुपाकुर्यादिति शालीकिः '

॥ ११ ॥

II. 59. 17. वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन " आदितश्चान्ततश्चेति शालीकिः ' ॥

II. 60. 3. अभ्यवघ्रापण इति ॥ सूत्रं बौधायनस्य " माध्यंदिन एव सवने ऽभ्यवघ्रापयेदिति शालीकिः ' ॥

पशूनामासादन इति ॥ पशुंपशुं पशुश्रोचासादयेदिति बौधायनो " मुख्यमेवेति शालीकिः ' ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः " सर्वान्सहेति शालीकिः ' ॥

---

१ Thus Be C' U (sec. m.); रुक्म' the other MSS.

२ C' and the Viv. एका॰ ।

62. 1. आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती च स्यादध्वर्यु-दानीया चेति बौधायनस्य″ऽध्वीका च स्यादध्वर्युदानीया चेति शालीकि″र्मन्त्रवती च स्यान्मन्त्रवरया चैनया निष्ठया यजेतेत्यौपमन्यवः′ ॥

62. 6.५ देविकाहविषां करण इति ॥ कुर्यादिति बौधायनो″ न कुर्यादिति शालीकिः′ ॥ १७ ॥ षष्ठः ॥

अथातो वाजपेयं व्याख्यास्यामः ॥

चिन्वीत वाजपेयेऽग्निमिति बौधायनो″ न चिन्वीतेति शालीकिः′ ॥

63. 3.१० औदुम्बरꣳ रथचक्रꣳ सप्तदशारमिति ॥ यूपं बौधायनस्य″ दार्व्यत्त्वमेवैनत्कुर्यादिति[1] शालीकिः′ ॥

63. 12. खादिरौ विदर्व्यौ[2] वभ्रैर्व्यूतावुपकल्पयत[3] इति ॥ यूपं बौधायनस्य″ बस्ताजिनं चैवात्रोपकल्पयीत शतमानं च हिरण्यमिति शालीकिः′ ॥

63. 13.१४ न यौपस्य जघन्याहःसु पुरस्तादाषाढ्यै पौर्णमास्यै दीक्षेत इति ॥ यूपं बौधायनस्य″ शरदि वाजपेयेन यजेतेति शालीकिः′ ॥

१ ०त्त्व० G (sec. m.).— ०मेवैनत् G (pr. m.) U, ०मेवैतत् the other MSS.

२ Thus G and the Viv.; विक्षि Bu, विदूच्यौ B, विदूच्यौं U, विकर्णा Be, विकर्णौं C′ (pr. m.), विकर्णौं (sec. m.).

३ Thus G, वर्ध्रैर्व्यू० Be, वभ्रैर्व्यू० C′, वंध्रैर्व्यू० Bu, वाध्रैर्व्यूं० U, वध्र्यूं० B, वभ्रैर्व्यूं० the Viv. (one copy), वभ्रेह० (another).

II. 64. 4; 65. 10. आविष्याणाꣳ होम इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 64. 12. वाजपेयिकायै सुरायै संधान इति ॥ सूत्रमाचार्ययोर्यो ह स्माहौपमन्यवो यथैव सुरा स्यात्तत आहारयेदिति ॥

II. 65. 4. यो ऽरत्निमात्रेऽरत्निमात्रे वा विध्यति धनुर्वेष्टीर्वा प्रवेष्टयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 65. 5. गौधूमं[1] चषालमिति ॥ सूत्रं बौधायनस्य गोधूमपिष्टानामपि कुर्यादिति शालीकिः ॥

II. 66. 2. दुन्दुभीनामाघ्नन इति ॥ सूत्रं द्वैधमेवैतद्भवति ॥

II. 66. 14. क्रतुकरण इति ॥ सूत्रꣳ शालीकेर्यो ह स्माह बौधायनो ऽतिरात्रमध्यस्य क्रतुमुपेयात्समानपक्षे चैनꣳ संतिष्ठापयिषेदिति[2] ॥ १३ ॥

II. 66. 16. षडैन्द्रानतिग्राह्यान्गृह्णातीति ॥ सूत्रं बौधायनस्य सर्व एवैते[3] सोपयामा[4] गृहीतव्या[4] भवन्तीति शालीकिः ॥

II. 67. 10. सुराग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य सजुष्टान्परिमृज्य[5] सादयेदिति शालीकिः ॥

---

१ Thus G and the Viv. (one copy), गौधमं Bu; गोधूमं the other MSS.

२ Thus Be C′ U (sec. m.); संविपतिषेदिति B G; संतिष्ठपयिषेदिति Bu.

३ Thus G C′; एवैते U, एवैतैः B Be; Bu defective.

४ सोपयामगृहीतो॰ U.

५ Thus Be C′; सचजुष्टा॰ Bu U, सचजुष्मा॰ B G.

7. 12. द्विमेखि[1] वा त्रिमेखि[1] वोद्दीत आयातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

68. 1. पशुरशना आदाय यूपमभिप्रेयादिति बौधायनः ॥ पशु रशना आदाय यूपमभिप्रेयादिति शालीकिस्तस्यो रशना आदाय यूपमभिप्रेयादित्यौपमन्यव ॥ एकामेव रशनामादाय यूपमभिप्रेयादित्यौपमन्यवीपुत्रो ॥ ऽग्नीषोमीयरशनाया-मेव नियुञ्ज्यादित्याश्मौगविः । ॥

68. 2. वाजपेयिकानां पशूनामुपाकरण इति ॥ ऐकादशिना-नुपाकृत्य[2] वाजपेयिकानुपाकुर्यादिति बौधायनो ॥ वाजपेयि-कानेव नैवैकादशिनानिति शालीकिः । ॥

प्राजापत्यानामुपाकरण इति ॥ एकैकश उपाकुर्यादिति बौधायनः ॥ सर्वान्सहेति शालीकिः । ॥

70. 3. वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधा-यन ॥ आदितस्त्वान्ततश्चेति शालीकिः । ॥

हृदयशूलानामुदासन इति ॥ एकैकश उदासयेदिति बौधायनः ॥ सर्वान्सहेति शालीकिः । ॥

72. 15; 15. रथानामभियोजन इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनो य एवैष समवक्षेपणो मन्त्रस्तं प्रथममभियोजनानां कुर्यादथ तूष्णीमश्वान्समवक्षिपेदिति । ॥

76. 5. काष्ठागमन इति ॥ स ह स्माह बौधायनः प्रदक्षिण-

---

[1] द्विमे॰ and त्रिमे॰ G (sec. m.).

[2] ॰कृत्वा॰ the Viv.

माहृत्यैतां[1] काष्ठां गच्छेयुरथामुतो ऽपसलैरावर्तेरन्नित्यु'पो, ह स्माह शालीकिरपसलैराहृत्यैतां[1] काष्ठां गच्छेयुरथामुतः प्रदक्षिणमावर्तेरन्निति'॥ १४ ॥

II. 79. 14. अथ यजमानं तार्प्यं परिधापयतीति ॥ सूत्रं बौधायनस्योभे एवैते यजमानं परिधापयेदिति शालीकिः'॥ ५

II. 80. 2. भित्वा आयातन[2] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 80. 5. तां दर्भैः कल्पे[3] रोहतीति[3] ॥ सूत्रं बौधायनस्यैतैरेव मन्त्रैः प्रत्यवरोहेदिति शालीकिः'॥

II. 81. 2. अथास्मै प्रत्यवरोहणत[4] आसन्दीं निदधातीति[5] ॥ सूत्रं १० बौधायनस्य बस्ताजिनं चैवाखाच[6] प्रत्यवरोहेच्छतमानं[7] च हिरण्यमिति शालीकिः'॥

१ Thus both times C' only; •हत्येताः both times G and B the second time; हृत्येत B the first time; all the MSS. (exc. C') •स्त•, not स्वे•।

२ Thus B G, चायतन the Viv, चातन Bu, चाचाय Be C'.

३ Thus G U C' (sec. m.) and the Viv.; •ल्पोरोह• Bu, •ल्पेरारोह• B Be.

४ Thus only the Viv., प्रत्यवरोहण the MSS.

५ Thus the Viv., निनिनोतीति Be, निनोतीति C', प्रत्यवदधातीति B Bu G U.

६ Thus B U G; चैवाखच Bu; च only Be C; चाख seems superfluous.

७ Before शतमानं B Bu U G ins. इति।

. 81. 5. अथैनमेतयासन्द्या सह आवहन्त्या वा भजतीति[१] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

. 81. 8. अतिग्राह्याणां भक्षण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I. 83. 10. प्राजापत्यानां भक्षण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 84. 2. गृहपतीयेष्विति ॥ द्वे अथ गृहपतीये उपयच्छोपयच्छेदिति बौधायनो ऽपच्छेदमिति शालीकिः समस्तान्येवैतान्यनुप्रहृत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः ॥ १५ ॥ सप्तमः ॥

II. 85. 1. अथातो राजसूयं व्याख्यास्यामः ॥

चिन्वीत राजसूये ऽग्निमिति बौधायनो न चिन्वीतेति शालीकिः ॥

. 85. 9. पुनरभ्युक्ष्य पिष्टानि कृत्वाहारयेदिति बौधायनस्तथाभ्युक्षान्येवैतानि[२] स्युरिति शालीकिः ॥

85. 10. नैर्ऋतस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालीकिः ॥

I. 85. 12. एकोल्मुकस्य हरण इति ॥ अन्वाहार्यपचनाद्धरेदिति बौधायनो ग्रामाग्नेरिति शालीकिः ॥

II. 86. 1. नैर्ऋतस्य होम इति ॥ स्रुवं बौधायनस्य विस्रंसिकाकाण्डाभ्यामेनं परिगृह्य जुहुयादिति शालीकिः ॥

---

१ भजंतीति G B, हविर्भजतीति Bu; U Be C′ corrupt.

२ Thus G; ॰भ्युक्षाण्ये॰ U, ॰भ्युक्ष्ये॰ B, ॰भ्यग्राण्ये॰ Be C′.

II. 86. 3. दक्षिणानां दान इति ॥ अहरहर्दद्यादिति बौधायन ॥ आदितश्चान्ततश्चेति शालीकिः । ॥

II. 86. 3. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो ॥ यथोपपादमिति शालीकिः । ॥

II. 86. 5. स्वाहा नमो य इदं चकारेति ॥ सूचं बौधायनश्चान्त-मध्यञ्च स्वाहाकारं परिणयेदिति शालीकिः । ॥

II. 87. 1. संतनीनामनुप्रयोग इति ॥ स ह स्माह बौधायनो यदह-रिष्ट्या वा पशुना वा यजेतापि तदहः संतनी[1] प्रयुञ्जीतेत्य॥थो ह स्माह शालीकिरहरहराश्रावणार्थं स्मैते दृष्टे भवतो । यदहरिष्ट्या वा पशुना वा यजेत न तदहः संतनी प्रयुञ्जीतेति । ॥

ib. चातुर्मास्यानामनुप्रयोग इति ॥ स ह स्माह बौधायनो यदहश्चातुर्मास्यानि प्रयुञ्जीतापि तदहः संतनी प्रयुञ्जीतेत्य॥थो ह स्माह शालीकिरहरहराश्रावणार्थं स्मैते दृष्टे भवतो । यदहश्चातुर्मास्यानि प्रयुञ्जीत न तदहः संतनी प्रयुञ्जीतेति । ॥

I. 88. 17. व्याख्यातं पश्वेभीयस्य करणम् । ॥ १६ ॥

II. 89. 3. अथोपवेषेणाङ्गारान्समूहतीति ॥ सूचं शालीकेर॥थो ह स्माह बौधायनस्तूष्णीमङ्गारान्समूह्याथैनाञ्जुवाहुतिभिरभिजु-हुयादग्नये[2] रक्षोघ्ने स्वाहेति पञ्चभिरंच प्रष्टिवाहिनं रथं दद्यादिति । ॥

1 Here and infra some of the MSS. read संतनीः (संतनी).

2 जुवाहुती° Be U C', जुवाहुत्या° Bu.

89. 11. अपामार्गसक्तूनाᳶ होम इति ॥ स्रुचᳶ प्राश्नीयेरन्नो ह स्माह बौधायनः समस्तेनैवास्मै मन्त्रेणापामार्गसक्तुजुह्या-नूष्णीᳶ स्रुवमनुप्रहरेत्तूष्णीमुपोत्तिष्ठेदिति[1] । ॥

89. 15. देविकाहविषां करण इति ॥ स्रुचं बौधायनस्य सोमᳶसोममनुवर्तेरन्निति प्राश्नीकिर्नेदेविकाहविर्भिर्वर्ते-दित्याश्मीरथिः । ॥

. 91. 3. अग्निभिः प्रत्यवसान इति ॥ अजस्रैः प्रत्यवस्येदिति बौधा-यनो ॥ उरण्योः समारोप्येति प्राश्नीकिः । ॥

पयसः समावेपन इति ॥ दृतौ वा विनाडे[2] वा समा-सिञ्चेदिति बौधायनो ॥ नवायां कुम्भ्यामिति प्राश्नीकिः । ॥

92. 14. स्वयंकृतेष्विति ॥ स्रुचᳶ प्राश्नीयेरन्नो ह स्माह बौधा-यनो गोन्यासप्रभृदितानां[3] कुशानां बर्हिः संनद्धोत्स्वयंपति-तानां काष्ठानामिध्मं । यदेव वेद्यं स्फ्यᳶ सा वेदिर्दृतिं वा विनाडं[4] वा रथ आधाय परिवहेद्यत्तच नवनीतमुत्पौदे-न्नद्राज्यᳶ स्यादिति । ॥

II. 93. 2. मैत्रावार्हस्पत्यस्य निर्वपण इति ॥ समानयतुशुष्टौ स्थाना-

---

१ °मुपोत्तिष्ठेदिति G U C′. °मुपतिष्ठेदिति B Bu Be; probably II. 89. 12 उपोत्तिष्ठति is the correct reading.

२ विनाडे G U C′. विनाळे the other MSS. and the Viv.

३ Thus Be C′ and comp. the Viv.: अयां नियतमसनैव प्रातिनानां कुशानां; गोन्यासप्रभृ° G B Bu, वेन्यासप्रभृ° U

४ विनाडं or विनाळं MSS.

मिति बौधायनो " नानाचतुर्मुष्टी स्यातामिति शालीकिः '

॥ १७ ॥ अष्टमः ॥

II. 94. 2. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्याप्यरोहितꣳ स्यादिति शालीकिः ' ॥

सोमक्रयण्युपैते[1] नित्याः शते स्युरिति बौधायन " एत एव शततमाः स्युरिति शालीकिः ' ॥

II. 94. 8. वसतीवरीणां ग्रहण इति ॥ सूत्रं बौधायनस्य " सारस्वतीरप्यत्र वसतीवरीर्गृह्णीयादिति शालीकिः ' ॥

II. 94. 18. आग्नेयस्यैन्द्राग्न उपालम्भ्यो भवतीति ॥ सूत्रं बौधायनस्य " ऐन्द्राग्न एव सवनीयः स्यादिति शालीकिः ' ॥

पात्राणां करण इति ॥ यथानिर्भेदं पात्राणि कारयेदिति बौधायनः " प्राकृतान्येवैतानि स्युरिति शालीकिः ' ॥

II. 98. 1. सारस्वतीनामभिहोम इति ॥ सूत्रꣳ शालीकेर् " नो ह स्माह बौधायनो याभ्यामेतदृग्भ्यां वसतीरभिजुहुयात्ताभ्यां पदेपदे जुहुयादथ तूष्णीꣳ सारस्वतीरभिजुहुयादिति ' ॥

II. 98. 7. अभिषेचनीयानां ग्रहाणां ग्रहण इति ॥ सूत्रमाचार्ययोर् " नो ह स्माहौपमन्यवः पुरस्तात्सदसो ऽभिषेचनीयान्ग्रहान्गृह्णीयादिति ' ॥

II. 99. 16; 102. 9. धनुषः प्रदान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

[1] Thus B G U (pr. m.). °पूपयिते Be C′ U (sec. m.). °क्रयेन Bu

100. 9 मारुतस्यैकविंशतिकपालस्य कपालोपधान इति ॥ ऐष्टिकैरुपधाय गणैरुपदध्यादिति बौधायनो ॥ गणैरेवेति शालीकिः । ॥

100. 9 आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्तूष्णीकेति शालीकिः । ॥ १८ ॥

101. 2. क्रौञ्चस्य स्थान इति ॥ अन्तर्वेदि तिष्ठेदिति बौधायनो ॥ बहिर्वेदीति शालीकिः । ॥

106. 7. मणीनां करण इति ॥ औदुम्बर औदुम्बरेण लोहेन प्रच्छन्नः स्यादिति बौधायन ॥ औदुम्बर एवेति शालीकिः । ॥

107. 4. तस्मिन्सह संग्रहीत्रा रथवाहने रथमादधातीति ॥ सूत्रं बौधायनस्याधातृणामेवैकः[1] संग्रहीता स्यादिति शालीकिः । ॥

108. 14. रश्मस्य प्रदान इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनो यजमानस्यैवैकस्य मन्त्रेण संप्रयच्छेत्तूष्णीमितरे संप्रयच्छेरन्निति[2] । ॥

109. 1. अक्षाणां करण इति ॥ सौवर्णाः स्युरिति बौधायनो ॥ राजता इति शालीकिर् ॥ नागदन्ता[3] इत्यौपमन्यवो ॥ वैभीतका इत्यौपमन्यवीपुत्रः । ॥

ib. अथास्मै पञ्चाक्षानपच्छिद्य प्रयच्छतीति ॥ सूत्रं शाली-

१ Thus G: °स्याधातृणामे° C', °स्याधातानामे° U, °न पधातनामे° B Be; in Bu this dvandva is missing.

२ °च्छेरंन्निति G U C'.

३ Thus G B Bu U: °दंष्ट्रा Be C'.

वेरंचो ह स्माह बौधायनो येनास्यानुपपन्नꣳ स्यात्तं तथाग्नि-
ष्टोमेहिमो ऽभ्ययꣳ राजाभूदिति । ॥

II. 111. 8. अथ विषुवति दर्भस्तम्बे जुहोतीति ॥ सूत्रं बौधायनस्य ॥ यत्रैव दर्भस्तम्बः स्यात्तद्गच्छेदिति[1] शालीकिः । ॥ १९ ॥ नवमः ॥

II. 111. 14. अग्नीनाꣳ हरण इति ॥ अजस्रान्हरेदिति बौधायनो । ऽरण्योः समारोह्येति शालीकिः । ॥

ib. वेद्यै करण इति ॥ सूत्रं बौधायनस्य ॥ पूर्वापूर्वा वेदिर्भवतीति शालीकिः । ॥

II. 112. 10. अथैनं तीर्थादानीय पवयित्वा पुण्डरिस्रजिनमुदानी- १०
येति ॥ स ह स्माह बौधायन उभयानि पुण्डरिकाणि कारयेत्सौवर्णानि च नादेयानि चेति ॥ नादेयान्येवेति शालीकिः । ॥

II. 112. 13. निदधत्यस्मा एतद्धविरुच्छिष्टं व्रतभाजनमिति ॥ सूत्रं
बौधायनस्य ॥ नात्र हविरुच्छिष्टं व्रतभाजनं निदध्यादिति ११
शालीकिः । ॥

II. 112. 17. सोमक्रयण्युपैते[2] नित्याः स्युरिति बौधायन ॥ एत एव स्युरिति शालीकिः । ॥

१ नच instead of नत् Be C'.

२ Thus B G I' (pr. m.); ॰युपैते Bu; ॰यूपस्थिते Be C' I' (sec. m.).

औपसदाꣳ[1] हविषां मन्त्रामन्त्र इति ॥ मन्त्रवन्ति[2] स्युरिति बौधायनस्तूष्णीकानीति[3] शालीकिः ' ॥

3. 14. आग्नेयस्य प्राजापत्यस्तूपर उपालम्भ्यो भवतीति ॥ सूपं बौधायनस्य " प्राजापत्य एव सवनीयः स्यादिति शालीकिः ' ॥

4. 11. भार्गवो होता भवतीति ॥ आदित एव भार्गवꣳ होतारं वृणीतेति बौधायनो " दशपेय एव भार्गवो होता स्यादिति शालीकिः ' ॥

शतं ब्राह्मणाः पिबन्तीति[4] ॥ यजमान[5] एकशततमः स्यादिति बौधायनो " यजमान एव शततमः स्यादिति शालीकिः ' ॥

114. 7. दक्षिणानां दान इति ॥ एता एव ब्राह्मणाभिविक्ता[6] दक्षिणा दद्यादिति बौधायन " एतन्मुखꣳ सहस्रमिति शालीकिः ' ॥ २० ॥

1. 115. 1. तेषामुत्थानेष्विति ॥ गच्छेयुरावभृथादिति बौधायनो " ऽप्युषोमान्ता इति शालीकि ॥ ध्रुवान्ता इत्यौपमन्यवः ' ॥

1. 115. 8. हविषोहविष इष्टा बार्हस्पत्यमभिघारयतीति ॥ बार्ह-

१ Thus G B and the Viv.; उपसदि C, औपसदानां C'. औपसदौ Bu; Be defective.

२ ०वत MSS.

३ Thus G and C (pr. m.): तूष्णीका इति B G (sec. m.). तूष्णीकेति C'. तूष्णीकामिति Bu.

४ cp. T Br. I. 8. 2. 2.

५ Before यजमान G B ins. वो, C वै ।

६ ०विविक्ता Be C'.

स्पत्यश्चापोह्या[१] बार्हस्पत्यमभिघारयेदिति बौधायन ॥ इत-
रेषामेव हविषां न बार्हस्पत्यस्येति शालीकिः । ॥

II. 115. 13. उच्चैरादित्याया आश्रावयत्युपांशु[२] मारुत्या इति ॥
आदित्याश्रावणप्रभृत्युपांश्वथेतरदुच्चैरिति[३] बौधायन ॥ आ
मारुत्याश्रावणप्रभृत्युपांश्वथेतरदुच्चैरिति शालीकिः ॥ सर्वैवो-
च्चैरादित्या सर्वोपांशु मारुतीत्यौपमन्यवः । ॥

II. 115. 15. मात्यदूतेष्विति ॥ सूक्तं बौधायनस्य ॥ मं[४] ते[४] ऽसौ[४] प्राह्वेवो-
दित्येव ब्रूयादिति शालीकिः । ॥

II. 117. 14. विराज इति ॥ सूक्तं बौधायनस्य ॥ यजनीये[५] ऽहन्पूर्व-
महर्भवत्युत्तरस्मिन्नुत्तरमिति शालीकिः । ॥

II. 118. 5. देविकाहविषां करण इति ॥ कुर्यादिति बौधा-
यनो ॥ न कुर्यादिति शालीकिर्न कुर्यादिति शालीकिः[६] ।
॥ २१ ॥ दशमः ॥

॥ इति द्वाविंशः प्रश्नः ॥

१ Thus G and the Viv.: ॰श्चापोह्या B, श्चपिह्या U. C' Be corrupt. Bu defective.

२ Thus G, all the other MSS. more or less corrupt

३ Here and infra all the MSS. इतर instead of इतरद् ।

४ Emended; ॰समांवेषो Be C' U (sec. m.), ॰समंवेषो Bu, ॰समंवेषे G, ॰समंवषै B; cp. XXIII. 2 and T Br. I. 8. 3. 4: भूताम्प्रविशेति ।

५ Thus all.

६ In the MSS. no repetition of the final words.

9.1. •अथात इष्टिकल्पं व्याख्यास्यामः ॥

स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः कुर्यादन्वाज्यभागावुच्चैर्देवता इत्यथो ह स्माह शालीकिः सप्तदशसामिधेनीकाः स्युर्वृधन्वन्तावाज्यभागावुपांश्वेव देवता इति । ॥

याजमानस्य करण इति ॥ सꣳस्थितमिष्टिपथे[१] याजमानं कुर्यादिति बौधायनः । कुर्याद्यथावकाशं याजमानमिति शालीकिः । ॥

21.3. अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेदिति ॥

स ह स्माह बौधायनः पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालमनुनिर्वपेद्यातिपन्नां प्रतियजेदित्यथो ह स्माह शालीकिः पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालꣳ समानतन्त्रमनुनिर्वपेन्न यातिपन्नां प्रतियजेदित्यन्यतरेणैव यद्यातिपन्नां प्रतियजेदित्यौपमन्यवो ऽथो ह स्माहाग्नौगविर्वि वा एतस्य यज्ञश्छिद्यते यस्य तन्त्रे प्रतते ऽन्यत्तन्त्रं[२] प्रतायते । य एवैषो[३] ऽच्युत[३] आग्नेयो ऽष्टाकपालस्तमेव पौर्णमास्यां वामावास्यायां वा पाथिकृतं कुर्यान्न यातिपन्नां प्रतियजेदिति । ॥

21.7. अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहि-

१ •स्थितमिष्टिपथे G, •स्थितमिष्टिपथे B. •स्थितिमिष्टिपथे U. स्थितिमिष्टपथे Bu, •स्थितमिष्टपथे Be C'.

२ न्तंत्रं MSS.

३ Thus C'. एवैषोऽच्युत U. एवैषोऽच्यत B G Be, एवैषाच्युत Bu.

ताग्निः समन्नत्यमिव चरेदिति ॥ आधानप्रभृत्येवैतदुक्तं भवतीति बौधायनो ॥ ऽन्याहितेषु चैवोपसमाहितेषु चाग्निष्विति शालीकिः । ॥

II. 121. 9. अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि सचेरन्निति ॥ हुत्वाग्निहोत्रमिष्टिꣳ सꣳस्थापयेदिति बौधायनः ॥ सꣳस्थितायामिष्ट्यामग्निहोत्रं जुहुयादिति शालीकिः । ॥

II. 121. 17. अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्निति ॥ स ह स्माह बौधायनो लोहितोष्णीषा लोहितवाससश्चर्त्विजः प्रचरेयुरिति ॥ याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः । ॥

II. 121. 18. अग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन्यो वा बिभीयादिति ॥ स ह स्माह बौधायनः प्रोक्षणीषु च गन्धानावपेयुर्गन्धवन्तश्चर्त्विजः प्रचरेयुरिति ॥ याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः । ॥

II. 122. 7. अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदिति ॥ स ह स्माह बौधायनो या तथाम्नाता स्यात्तां चेन्निर्वपतः कामो न समृध्येताथैवं[1] कुर्यादित्येवैवं सार्वकामिकी स्यादिति शालीकिः ॥ कामेकाम एषा[2] स्यादित्यौपमन्यवः । ॥

II. 124. 1. अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नि-

१ ॰थैवं G U Be: थैवं B C. थैव Bn.

२ एषा G, एवैषा U, all the other MSS. एष ।

हुतो ऽहुते ऽग्निहोत्र उद्वायेदिति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनो मन्थनमभिमन्थनमुपसमिन्धनमित्येतान्मन्त्रा- न्निगदेदिति ॥

124. 17 वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति ॥ स ह स्माह बौधायन उत्थितायां निर्दशायां वैश्वानरं द्वादश- कपालं निर्वपेत्संस्नाप्य च कुमारं प्रवेशयेदिति । जात- मेव विदित्वेति शालीकिर्न च संस्नाप्य कुमारं प्रवेशये- दित्यन्तरे पर्वणीत्यौपमन्यवः[1] ॥ १ ॥

125. 2 विपर्यस्तहविषीति ॥ मारुतः[2] प्रथमं मन्त्रकर्म[3] लभेतेति बौधायनो ऽवदानत इति शालीकिः । प्रदानत इत्यौप- मन्यवस्तौ तुल्याभ्यामित्यौपमन्यवीपुत्रः ॥

125. 9. वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वेति ॥ यथैव यक्ष्यमाणः स्यात्तदायतनं तद्गत्वा वैश्वानरं द्वादशकपालं निर्वपेदिति बौधायनः । स्वस्मिन्नेवाग्नाविति शालीकिः ॥

126. 3. यथा रज्जोत्तमां गामाजेदिति ॥ सूत्रं बौधायनस्येमौ ते ऽमौ पाशेपौदित्येव[4] ब्रूयादिति शालीकिः ॥

१ The words after प्रवेशयेदिति only in C and U (sec. m.): Be has of them only औपमन्यवो, the other MSS. omit the opinion of Aupamanyava.

२ मारुतं Bu.

३ सर्वं Be C (pr. m.)

४ Thus C U (sec. m.). प्रचोषे• the other MSS.: cp. XXII. 21 and XIII. 10: 126. 5.

II. 127. 10. यद्यजानपीमे संनह्येदिति ॥ सूत्रं बौधायनस्य ॥ यद्य-जामामप्यत्र बर्हिः संनद्धं भवतीति शालीकिः ।॥

II. 128. 7. आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्निति ॥ सूत्रं बौधायनस्य ॥ प्रत्यभिचरन्तमेव विद्विषेति शालीकिः ।॥

ib. सारस्वतमाज्यमिति ॥ मन्त्रनिवृत्तमेतद्भूतं[1] स्यादिति बौधायनस्य ॥ ब्यौकमिति शालीकिः । कालेकाल एवैनद्ध्रुवा-ज्याद्गृह्णीयादित्यौपमन्यवः[2] ।॥

II. 128. 17. अध्वरकल्पायामिति ॥ स ह स्माह बौधायन इष्टान्तं प्रथमं तन्त्रं कुर्यादेवं द्वितीयं तृतीयेन सहावभृथं वर्तयेदि-त्यथो ह स्माह शालीकिरा प्रणीताप्रथमस्य[3] तन्त्रस्य परि-शापयेदेव[4] द्वितीयमेवं[5] तृतीयं[5] । तृतीयेन सहावभृथं वर्तये-दिति ॥ सपूर्वपात्रविष्णुक्रमा[6] इत्यौपमन्यवः[6] ।॥

II. 129. 7. यो ब्रह्मवर्चसकामः स्यात्तस्मा एतं सोमारौद्रं चरुं

१ मंचभिवस्र॰ B G; मंचेभिवस्र॰ U, मंचंभिकपत॰ Bu: मंचभिमवस्र॰ Be, मंचभिवस्र॰ C′.

२ ध्रुवाज्यात्गृह्ण॰ G U (sec. m.): ध्रुवाज्याज्यात्गृह्ण॰ B U (pr. m.): ध्रुवा-ज्यंग्रह॰ Be C′; ध्रुवाग्रह॰ Bu.

३ Thus Be C′ U: प्रणीताप्र॰ B G (pr. m.), प्रणीतास प्र॰ G (sec. m.); Bu defective.

४ Thus G B: कुर्यादेवं U Be C′: Bu defective

५ एवं तृतीयं om. B G.

६ ॰क्रमादित्यौ॰ C′ U (sec. m.).

तिष्यापूर्णमासे निर्वपेदिति ॥ उपवसथीये ऽहनि निर्वपेदिति बौधायनो ॥ यजनीये ऽहनीति शालीकिः । ॥

9. 14. आज्यं प्रोक्षणमाज्येन मार्जयन्त इति ॥ उदकुम्भ आज्य-स्रुवं प्रत्यस्येदिति बौधायनः । प्रोक्षणं चैव मार्जनं चाज्येन[1] कुर्यादथेतरदद्भिः कुर्यादिति शालीकि॰ यत्किं चाद्भिः कार्यꣳ स्यात्सर्वं तदाज्येन कुर्यादित्यौपमन्यवः । ॥

16. यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेदिति ॥ विज्ञातेषु रूपेषु निर्वपेदिति बौधायनः ॥ पुरस्तादेव शङ्कमान इति शालीकिः । ॥

30. 7. अर्धेष्विति ॥ सꣳस्थितायामिष्टायामर्धानश्यादश्यादिति बौधा-यनो ॥ ऽत्रैव परिधयोरन्तिति शालीकिः । ॥ २ ॥ प्रथमः ॥

30. 15. विपर्यस्तहविषीति ॥ मारुतः प्रथमं मध्यकर्म लभेतेति बौधायनो ॥ ऽवदानत इति शालीकिः ॥ प्रदानत इत्यौप-मन्यवस्तान्तुच्याद्यादित्यौपमन्यवीपुत्रः । ॥

30. 17. मारुतीभ्याꣳ होता यजतीति ॥ स ह स्माह बौधायन आदित एव होता मरुत आवाहयेदनुवाचयतो ऽध्वर्युरिति ॥ याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः । ॥

31. 19. आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम इति ॥ तूष्णीꣳ शालीकेरर्थो ह स्माह बौधायनः सर्वाः सपदाः सर्वाः सधा-विधाः सर्वाः समयूखेषा इति ॥

132. 2. पशुपाꣳसुनाꣳ हरण इति ॥ तूष्णीꣳ शालीकेरर्थो ह

१ चैवाज्येन B Be.

आह बौधायनः समस्तेनैवास्य[1] मन्त्रेण षडुपांशुमन्त्रोत्तर-वर्ष्यं[2] भावयेदथ तूष्णीमुरस्यनुमिनयेदिति ।॥

II. 133. 16 अनष्ट सुवर्णानि कृष्णाजिनानि भवन्तीति ॥ सूत्रं बौधायनस्यौपग्रतान्येवैतानि[3] स्युरिति शालीकिः परिहारये-वैषामिति[4] ।॥

II. 134. 3 चत्वारिचत्वारि कृष्णाजिनान्यवद्यति चतुरवत्तस्याप्त्या इति ॥ स ह स्माह बौधायनो यान्यवत्तानि स्युर्जुहुयादेव तान्यथ यानि भक्षार्थानि स्युस्तान्युपगृहीतान्येव[5] तानि स्युरथेतराणि समावचो विभजेरन्निर्यो ह स्माह शालीकिर्यान्यवत्तानि स्युर्जुहुयादेव तान्यथ यानि भक्षार्थानि स्युस्तान्युपगृहीतान्येव[5] तानि स्युरथेतराणि प्राशित्रहरणे कृत्य ब्रह्मणे परिहारये-दिति ।॥

II. 137. 21. यः पापयक्ष्मगृहीतः स्यात्तस्मा एतमादित्यं चरुममा-वास्यायां निर्वपेदिति ॥ उपवसथीये ऽहन्निर्वपेदिति[6] बौधा-यनो यजनीये ऽहनिति[6] शालीकिः ।॥

---

१ ०स्य Be C' U (sec. m.), ०स्ये Bu U (pr. m.), ०स्मिन् G B.

२ Thus (and cp. vol. II. 104. 2) G, ०वर्षे the other MSS.

३ बौधायनस्यौपग्रता० G U, ०नस्य वीपय० B, ०धायनस्यौपचराण्य Be, ०धायनस्यौपचरन्त्येवैतानि C', but cp. the Viv. उपग्रहेण तानि भवन्तीति । ग्रहणीये श्राणि वाधिकानि वैति ।

४ Thus the Viv. (ग्राह्यं to be understood), प्रतिहार० the MSS.

५ Thus G : स्युरुपग० the other MSS.

६ Instead of ऽहन् (thus B G Bu) the other MSS. ऽहनि ।

0. 9. बाल्बजे परिधिष्यतीति ॥ ऐषीकैः परिधाय पौरोडा-
शिकैः परिदध्यादिति बौधायन ऐषीकैरेवेति शालीकिः ॥

11. आहुतीनां होम इति ॥ स्रुवं शालीकेरन्यो ह स्माह
बौधायन औदुम्बरैः पात्रैरेता आहुतीर्जुहुयाद्धुत्वा चैतानि
५ पात्राण्येवानुप्रहरेदिति ॥

1. 1. आज्यस्यावेक्षण इति ॥ स्रुवं बौधायनस्य यजमानमेवाव-
नीतमभवदित्येतेनैवाज्यमवेक्षितमुत्पुनुयादिति[१] शालीकिः
॥ ३ ॥

12. यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपाला-
न्निर्वपेदेकातिरिक्तानिति ॥ स ह स्माह बौधायनो वैश्वानरे-
णैकं[२] प्रतिगृह्णीयादेवं[३] द्वौ[४] गणं[५] तु प्रतिगृह्य कुर्वीत
बहुषु[६] वारुणानेकातिरिक्तानित्यन्यो ह स्माह शालीकि-
र्वैश्वानरेणैकं प्रतिगृह्णीयान्न तु द्वौ[७] गणं तु प्रतिगृह्य
कुर्वीत न[८] तु द्वयोर्बहुषु वा वारुणानेकातिरिक्तानिति ॥

१ पुनुयाद् again all

२ About the correct reading and the meaning of this dvaidha I am uncertain; °णैकं° B C Bu, °णैवैकं Be G, °णैक° C'.

३ नवं C' U, एव the other MSS.

४ द्वौ नवं Be B G. द्वौगुणं C', द्वावनं B. द्वौगुणं U (sec. m.)

५ MSS. exc. Be C' ins. तु. U (sec. m.) नतु ।

६ वा ins. Bu.

७ U again द्वौगुणं; नवं the other MSS., गुणं C'.

८ न given by Be C' U (sec. m.), not by B Bu G U (pr. m.).

II. 143. 2. आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनो ऽमन्त्रकेति शालीकिः ॥

II. 143. 15. पुनः समूहति समूह्यावद्यतीति ॥ सूत्रं बौधायनस्यैतैरेव मन्त्रैः प्रतिसमूह्यावद्येदिति शालीकिः ॥

II. 144. 7. अथ सिंहमष्टाकपालं पुरोडाशं निर्वपतीति ॥ सूत्रं बौधायनस्य संदिग्धपुरोडाश एवैष स्यादिति शालीकिः ॥

II. 146. 3. (147. 17). वर्षाहूस्तम्बस्याभिहोम इति ॥ सूत्रं बौधायनस्य यत्रैव वर्षाहूस्तम्बः स्यात्तद्गच्छेदिति शालीकिः ॥

II. 148. 4. कृष्णाजिनस्यावधवन[1] इति ॥ अन्तर्वेदि तिष्ठन्कृष्णाजिनमवधुनुयादिति बौधायनो बहिर्वेदीति शालीकिः ॥

II. 148. 6. अन्तःसदकारीयं करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥

II. 151. 1. संसर्गे[2] प्रायश्चित्तकरण इति ॥ सूत्रमाचार्ययोर्यो ह्याहौपमन्यवो यो नु खल्वाहवनीयो ऽत एवैव उद्धृतो भवति । यामयोनिरन्वाहार्यपचनस्तत्तत्र[3] नास्ति प्रायश्चित्तं । प्रमत्तो हि दृष्टाग्निसंसर्ग इति ॥

इतीत्था[4] इमा द्वैधो व्याख्याता: ॥ ४ ॥ द्वितीयः ॥

---

१ Thus G, °स्यावधवन C, °स्यावधाय Bu Be C′, °स्यावधव B, °स्याव-धन the Viv.

२ संसर्गे B Bu G.

३ तत्ता Be C′.

४ इतोत्था B C′ Be.

5. अभिक्रामं जुहोतीति ॥ कियति नु खल्वेतद्भक्तं भवतीति ॥ पञ्च प्रक्रमा इति बौधायनो ॥ अल्पाद्वा प्राक्रामा इति शालीकिः[1] ॥

16. यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यापमवद्येदिति ॥ स च स्माह बौधायनो यदि पशोरवदानं नश्येदेकं यदि द्वे आज्यस्य[1] प्रत्याख्यायमिष्ट्वा तत्कृत्वा[2] पुनर्यजेतेत्यथो च स्माह शालीकिर्यदि पशोरवदानं नश्येदेकं यदि द्वे आज्यस्य[1] प्रत्याख्यायमिष्ट्वा तत्कृत्वा[3] कृतमेव मन्येताथ यदि भूयो ऽप्येवं कुर्यादिति[1] ॥

2. अपसव इति ॥ यत्र क्व च नाव्या[4] वा[4] नदी[4] स्यादन्तरेणोदयस्यवती[5] वापसवस्यवेति बौधायनो ॥ यत्र क्व च न ग्राव्हा न संसृज्येरन्नसंस्रवस्यवेति शालीकिर्यत्र कर्मान्तरेणेयादसंस्रवस्यवेत्यौपमन्यवः[6] ॥ प्रश्नयोरेव जनपदयोरसं-

---

१ Some of the MSS. आज्यस्यैव ।

२ च ins. B.

३ After कृत्वा G B ins. न पुनर्यजेत (or •जेतेति), but cp. infra XXIII. 8.

४ Thus G B (नाव्या नावी the Viv.): नावावा नदीव Bu U (pr. m.). नावयावावदी U (sec. m.): नावयावा नदी C′: नावापावा नदी Be.

५ Thus G and B (the latter only •ति); •रेणोदयस्यवति Bu U; •रेणोद.वती Be C′ (pr. m.). •रेणोदापवती C′ (sec. m.). The Vivaraṇa: उदकमवको (?) भावः वक्षो वाचः । उदकवायवती ।

६ Thus B G Bu U (pr. m.); कर्मणोदकर्मान्तरेणेयाद• U (sec. m.); कर्मणोदकर्मान्तरेणेयाद• C′, •णोदकर्मान्तरेणेयाद• Be; but in the Vivaraṇa there is no mention made of water; यत्कर्मान्तरकरणावसरात् अर्वागिति ।

भवन्तीत्यौपमन्यवीपुत्रो नाविद्धिषाणयोः सङ्गवो विद्यत इति छागलेयब्राह्मणं[1] भवतीत्याश्नौगविः ।॥

II. 157. 3 अभिभूतीनाᳫं होम इति ॥ आध्वरा हुत्वा साम्नाय-णिका[2] जुहुयादिति बौधायनः साम्नायणिका[2] एवेति शालीकिः ।॥

II. 162. 18 दीर्घप्रसृतेष्विति ॥ सूत्रᳫं शालीकेर्दर्शो ह स्माह बौधा-यनो याभ्यामेतदृग्भ्यां[3] पूतभृदाधवनीययोर्जुहुयात्ताभ्यां[4] ग्रहे-ग्रहे जुहुयादथ तूष्णीᳫं संस्रावमवनयेदिति ।॥

II. 167. 6. नित्ये ग्रहणे वैष्णवीमृचमनुवर्तयतीति ॥ सूत्रं बौधा-यनस्य पृषदाज्य एवैषानुवर्तयितव्या भवतीति शालीकिः ।॥

II. 169. 5. स उक्थ्यमुक्थ्यं त्वेव प्रतिगीर्याद्यथा इत्याह सवनᳫं सवनं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ।॥

II. 171. 8 (172. 14). पृष्ठ्यषडहानां ग्रहण इति ॥ सूत्रᳫं शालीकेर्दर्शो ह स्माह बौधायनो यत्र क्वचैतान्यहानि संगच्छेयुर्गृह्णीयादेव तत्र पृष्ठ्य-षडहानिति संवत्सर एवैते दृष्टा भवन्ति संवत्सर एवैना-न्गृह्णीयादित्यौपमन्यवः[5] ।॥

१ Thus B G Be C. ॰यंत्रा॰ Bu. ॰वीषात्रा॰ U (pr. m.). ॰त्रा॰ U (sec. m.). ॰वीषित्रा॰ the Vivaraṇa.

२ साय॰ the MSS

३ Thus (and cp. infra p. 157, 8) G Bu U (pr. m.). ॰ामेवच॰ Be U (sec. m.). ॰आमेषमह॰ B. यथामेवच॰ C.

४ पूतभ्रुताधवनीयेक॰ U (sec. m.). पूतभृदाधवनीयेजु॰ G B U (pr. m.)

५ ॰वैषंह॰ all.

1. 16. पृष्ठ्यग्रहाणां भक्षण इति ॥ स ह स्माह बौधायनो ऽनुसवनभक्षेण[1] चैवैनाभ्यवेक्षित्येन चेति ॥ नित्येनैवेति शालीकिः । ॥

173. 7. अंशूनां प्रवृञ्जन[2] इति ॥ एकैकशः प्रवृञ्चेदिति[3] बौधायनः ॥ सर्वान्वृञ्चेति शालीकिः । ॥ ५ ॥

73. 12. आधवन[4] इति ॥ अतिचारमाधुनुयादिति बौधायनो ॥ यथाधविचमिति शालीकिर्मैत्रयेदित्यौपमन्यवः । ॥

174. 9. अंशोर्होम इति ॥ सूक्तं शालीकेर्यो ह स्माह बौधायनो याभ्यामेतदृग्भ्यामुपस्पृशेत्ताभ्यामेनं जुहुयादथ तूष्णीमुपस्पृशेदिति । ॥

175. 1. पृश्निग्रहाणां ग्रहण इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

76. 13. तेन कक्षमुपोषतीति ॥ सूक्तं बौधायनस्यापूपेनैवाग्न्य कक्षमुपोषेदिति शालीकिः । ॥

76. 16. ऋषभो गोषु जीर्यतीति ॥ सूक्तं शालीकेर्यो ह स्माह बौधायनो यमप्यन्यं बहिस्तम्भात्पशुमालभेत तत्राप्येतानि कुर्यादुपाकरणीयपयोर्वपायां देवतास्विति । ॥

१ अनुसवनंभक्षेण B G U (pr. m.): अनुसवनभक्षेय Bu, अनुसवनभक्षकेनैवैना॰ U (sec. m.) C'; Be corrupt.

२ Thus (cp. XIV. 12: 173. 7) B Bu G and the Viv., प्रवंजन Be, प्रवञ्जन U C'.

३ प्रवृञ्जे॰ or प्रवृञ्जी॰ the MSS. exc. G.

४ चाधावन Bu.

II. 178. 9. अष्टापद्यै गर्भस्य वपाहोम इति ॥ सूत्रं बौधायनस्य ॥ न गर्भस्य वपाहोमं जुहुयादिति शालीकिर्न च गर्भस्य वपाहोमं जुहुयान्नेडां न स्विष्टकृतमित्यौपमन्यवः । ॥ ६ ॥ तृतीयः ॥

II. 179. 9. अजवशाया उपाकरण इति ॥ सूत्रं बौधायनस्य ॥ वायव्ययैवैनामुपाकुर्यादिति शालीकिरथो ह स्माह व्यायाक्कात्यायनो यथाप्युपाकरण उपाकरणं लुप्यत एवमेवाप्युत्तरे मन्त्रा लुप्येरन्निति । ॥

II. 180. 5. यदाश्रायामभ्रो भवतीति ॥ स ह स्माह बौधायनो यद्यपास्त्रिता[१] अश्वा मेघाः स्युः संस्थापयेदेवाथ चेत्संश्रुः स्युरथैवं कुर्यादित्यथो ह स्माह शालीकिर्यद्यह नादित्यमन्तर्दध्युः[२] संस्थापयेदेवाथ चेदेनमन्तर्दध्युरथैवं[३] कुर्यादिति ॥ नाश्रायामसंस्थापनं[४] विद्यत इति गौतमः । ॥

II. 180. 17. अयेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥ ॥

II. 181. 15, 16. अश्वातानेष्विति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्याथो ह स्माहौपमन्यवो ऽश्वातानाञ्जुहुयात्कृत इति स्रुवाज्जतीरेवैता जुहुयाद्गच्छेयुश्च दर्शपूर्णमासावश्वातानाञ्जुहुयात्कृत इति । ॥

---

१ ? यद्यपाम्नाभिता Be C', यद्यपानभिता B G U, यद्दिपानभिता Bu.

२ Thus U, यद्यपर्यादित्य B G Be C', यद्यपयादित्य॰ Bu.

३ Thus Be C' U (sec. m.); एवम् om. B Bu G U (pr. m.), ॰वैवंनकुर्व॰ C'.

४ नाशश्रा॰ G U.— ॰वासंस्थापनं Bu, but the Viv. has असंस्थापनम् ।

2. 2. अन्वापरिधि स्विति[१] ॥ अन्यैव अन्वापरिधीन्कुर्यादिति[२] बौधायनः ॥ प्राकृता एवैताः[३] स्युरिति शालीकिः ॥

2. 7. द्विःस्वाहाकारं राष्ट्रभृतो जुहोतीति ॥ विपाशं जुहुयादिति बौधायनः ॥ द्वे द्वे स्रुवाहुती इति शालीकिः ॥

182 sqq. अधिदेवने जुहोति रथमुखे जुहोति रथनाभ्यां[४] जुहोतीति ॥ सूत्रं बौधायनस्य ॥ तदग्नीन्येवैतानि[५] स्युरिति शालीकिः ॥

3. 15. नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष इतीध्मो भवतीति ॥ सूत्रं बौधायनस्य ॥ पृथगेवैतानीध्मान्यभ्याधाय पृथगभ्यादध्यादिति शालीकिः ॥

4. 2. १० यदाह क्रूरं तेन वषट्करोतीति ॥ सूत्रं शालीकेरन्यो ह स्माह बौधायन उदश्वित्वारमित्यमर्कपर्णेन[६] स्वं[७] जुहुयाज्जुहोति वा कर्तीति न वषट्कुर्यादिति ॥

१ Thus Bu C′ and the Viv.: अन्वा॰ प॰ the other MSS.

२ Conjecturally (Viv.: अन्यैवमस्य अन्वाधाराः); अन्वाधे अन्वान्परि॰ B G U, अन्वयेव अन्वान्परि॰ Bu: अन्वाधे परि॰ Be C′

३ एवैता all.

४ नाभ्यां Bu U C′.

५ Thus C′ U (sec. m.); ॰तदग्नित्यव Be: ॰तदग्न्येवे॰ B Bu G U (pr. m.). The Viv.: एव (r. एत) दग्नौन्ये (r. न्य) व । एतेष्वेव चौमाः । नाश्वग्रिमयनयेति ।

६ Emended; उदश्वित्वा॰ Be, उदश्विदनया॰ C′. दुदवत्वा॰ B G, दश्वि॰ नया॰ Bu, उश्विदत्वा॰ U.

७ om. Be C′.

II. 187. 8. प्रचव इति ॥ स ह स्माह बौधायन उभयेन प्रणीयाद्वाविष्टीयाभिश्च सावित्रेण चेति '' सावित्रेणैवेति शालीकिः ' ॥ ७ ॥

II. 187. 16 sqq. अतिक्रामेष्विति[1] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 188. 10 sqq. अतीमोक्षेष्विति[2] ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 191. 2. प्राणपशूनां पशुप इति ॥ सूत्रं बौधायनस्य '' संवत्सर एवैते दृष्टा भवन्ति ' संवत्सर एवैनान्पटशीयादिति शालीकिः ' ॥

II. 192. 10. तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यादिति ॥ सूत्रं शालीकेरन्यो ह स्माह बौधायनः प्राक् चेदजिज्ञासायै[3] निषीदेदथैवं कुर्यादिति ' ॥

II. 195. 3. यद्याहवनीयेऽनुद्वाते गार्हपत्य उद्वायेदिति ॥ सूत्रं शालीकेरन्यो ह स्माह बौधायनः समस्तमेतमग्निं यते समुह्य दक्षिणेन विहारं पर्याहृत्य गार्हपत्यस्यायतनाद्भस्मोद्वाप्य शकृत्पिण्डेन परिलिप्य न्युप्योपसमाधाय ज्वलन्तमाहवनीयमुद्धृत्याहवनीयस्यायतनाद्भस्मोद्वाप्य शकृत्पिण्डेन परिलिप्य न्युप्योपसमाधाय समिद्वत्याहवनीये षट् स्रुवाहुतीर्जुहुयादुद्बुध्यस्वाग्ने

---

१ Thus G (sec. m.) and the Viv.; ०क्रमे० the other MSS. Vol. II. 187. 15 is to be corrected ऽतिक्रामाणा० ।

२ अती० Be C' and the Viv., अति० the other MSS.

३ Thus B G and the Viv., प्राक्चेद्ज्ञासायै Bu, प्राक्चेज्ज्ञासायै C', प्राक्चजिज्ञासायै U.

त्वमग्ने सप्रथा असि मनो ज्योतिर्जुषतां तन्तुं तन्वन्नुद्र त्वं चित्रमिति ॥

II. 196. 2 sqq. अतिरिक्तसोमेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

198. 1. ध्रुवे परिक्षीणे प्रायश्चित्तकरण इति ॥ स ह स्माह बौधायनः प्राक् चेदवभृथाच्छन्दोगबहृचेषु स्तभेरन्नभ्यावर्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा पुनर्यजेतेत्यथो ह स्माह शालीकिः प्राक् चेदवभृथाच्छन्दोगबहृचेषु स्तभेरन्नभ्यावर्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा कृतमेव मन्येतेति ॥

199. 6. अक्तां ग्रहण इति ॥ सूत्रं बौधायनस्य यदेवानन्तरमहः स्यात्तस्मिन्नेवावरुणायाम्बहाम्प्सवोरिति शालीकिः ॥

200. 3. यूपे विरूढे प्रायश्चित्तकरण इति ॥ सूत्रं बौधायनस्या-न्नासन्नमेव यूपे विरूढे प्रायश्चित्तं कुर्यादिति शालीकिः ॥

201. 11. यस्य सोम उपदस्येत्सुवर्णं हिरण्यं द्वेधा विच्छिद्यर्जीषे ऽन्यदाधुनुयाज्जुहुयादन्यदिति ॥ सूत्रं बौधायनस्य हि-रण्या एवास्यात ऊर्ध्वं सुत्यास्सभवा 'क्रयेरन्नभ्युन्नीयेरन्निति'[1] शालीकिः ॥

201. 19. आदारसोमेष्विति ॥ सूत्रं बौधायनस्यादारसोमेनैवाप्य-न्यमागमयेरन्निति[2] शालीकिः ॥

---

१ Corrected; क्रुषिरन्निति B G Bu U (pr. m.), °क्रुपवीरन्निति or °रन्निति Be C′ U (sec. m.).

२ Thus B G; °मयाचम्यनाम° Bu, मैवाम्बोन्नगमाय° Be C′ U (sec. m.).

II. 203. 4. आग्नीध्र इति ॥[1] आग्नीध्रो ऽनुवर्तेरन्निति बौधायन॥ एता[2] एवाग्नीध्रः स्युरिति शालीकिः । ॥ ८ ॥ चतुर्थः ॥

II. 245. 1 sqq. अथातो द्वादशाहं व्याख्यास्यामः ॥

II. 247. 4. चिन्वीत द्वादशाहे ऽग्निमिति बौधायनो । न चिन्वीतेति शालीकिः । ॥

अतिग्राह्य[3] इति ॥ स ह स्माह बौधायनो गृहपतिरेवारण्योः[4] समारोपयेदेतदतिग्राह्यस्य रूपं भवतीत्य॥न्यो ह स्माह शालीकिः पृथगेवारणीषु समारोपयेरन्गृहपतेरेव प्रथमस्य मथित्वा ज्वलत्सु ज्वलतो ऽपि[5] विसृजेरन्नित्येतदतिग्राह्यस्य[5] रूपं भवतीति । ॥

II. 245. 7. संनिवाप[6] इति ॥ स ह स्माह बौधायनः संनिवप्स्यन्तो ऽग्नये ब्रह्मण्वते पुरोडाशमष्टाकपालं निर्वपेयुरग्नये व्रतवते ऽग्नये व्रतभृत इत्य॥न्यो ह स्माह शालीकिरग्निसंयोजनी[7] स्वेष्टिभं-

१ Before आग्नीध्रो U has (rightly?) आग्नीध्रंच (r? आग्नीध्रंच,) C′ reads; आग्नीध्रंचाग्नीध्रीयमाग्नीध्रो।

२ Thus B U C′, the Viv.; एत the other MSS.

३ Thus U (sec. m.) and C′ originally; अतिपाद the other MSS.

४ Thus G B, गृहपतेरेवा॰ Bu Be C′, गृहपतिरेवा॰ U.

५ Thus B Bu G, ॰तोऽपि॰ Be, ज्वलत्सुज्वलतोऽपि॰ U (sec. m.).

६ Thus B G and cp. XXVI. 12; संनिवापव U (sec. m.) C′ Be, संनिवाप Bu.

७ Thus B Be; ॰योजना Bu G U C′.

वति । यथैवाग्निं चेष्यमाणः स्यात्तथैनां निर्वपेदिति ॥ प्राजापत्यं[1] पशुपुरोडाशमनुवर्तयेतेत्यौपमन्यवः[2] । ॥

245. 11. पवन इति ॥ एकैकश एवैनान्पवयित्वैकैकश उदानयेयुरिति बौधायनः ॥ सकृदेवैनान्पवयित्वैकैकश उदानयेयुरिति शालीकिः ॥ सकृदेवैनान्पवयित्वा सर्वान्सहोदानयेयुरित्यौपमन्यवः । ।

246. 6. आर्षेयवरण इति ॥ स ह स्माह बौधायनो ये केचन समानगोत्रा अव्यवेता अन्यथागोत्राः[3] स्युरेकस्यार्षेयस्य[4] वरण[4] एव तेषां वरणꣳ स्यादित्यथो ह स्माह शालीकिर्यदि चैव व्यवेता यदि[5] चाव्यवेताः[5] समानगोत्रा एकस्यार्षेयवरण[6] एव तेषां वरणꣳ स्यादिति । ॥

246. 13. अतधुक्ष्विति ॥ समानस्य समावत्सो विभजेरन्निति बौधायनः ॥ पृथगेवैषां[7] अतद्दुघः स्युरिति शालीकिः । ॥

१ प्राजापत्यस्य the MSS.

२ Thus U (sec. m.), ॰नुवर्तयेत्यौ॰ B G U Be, ॰नुनिर्वपेतेत्यौ॰ C′, ॰नुवर्तेतेत्यौ॰ Bu.

३ ? अन्यथागोत्रा Be, अन्यगोत्रोत्रा C′, अन्यथागोत्रात्रा Bu, अन्यथा गोत्राता U, अन्येव गोत्रा G B; अन्यथागोत्राः the Viv. (one copy), अन्यथावगोत्राः (another copy).

४ स्युरेक चार्षेयसंवरण C′, स्युरेक चार्षेयताः समानगोत्रा एकार्षेयं वरण Be.

५ Only in C′ B and U (sec. m.).

६ ॰र्षेयसंवरण or वरण U Be C′. On the whole difficult passage cp. Ap. XXI. 3. 4.

७ एव om. G and the Viv.

II. 247. 1. षष्ठ्यामुपसद्युत्तरवेदिं संनिवपन्तीति सूत्रमाचार्ययोरपि[१] वैकादश्यामिति विधिः[२] ॥

II. 247. 7. वसतीवरीणामभिग्रहण[३] इति ॥ सूत्रं शालीकेर्वा ह स्माह बौधायनो यदि सातिशेषः कलशः स्यात्तूष्णीमवनयेद्यद्यु वै सर्वश एव लेपः समवनीतः स्यादथैवं[४] कुर्यादिति शालीकिः ॥

II. 247. 12. सो ऽच[५] वैव[५] यज्ञस्य पुनराखम्भं जपति यज्ञायज्ञीयस्य वा स्तोत्रे शंयुवाके वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकिः ॥

II. 248. 1. विवर्तयन्ति परिधीननुप्रहरति[६] प्रस्तरमिति ॥ सूत्रं बौधायनस्यानुप्रहरेदेवाच प्रस्तरपरिधीनिति शालीकिः ॥ ९ ॥

II. 248. 5. निमील्याध्वर्युरपांशु[७] जुहोतीति । सूत्रं बौधायनस्यानन्वीक्षमाण एव जुहुयादिति शालीकिः ॥

१ Before अपि Be ins. अपीवत्सारोपमन्यवो, C' अपी° वो, U अपीवत्साद बौधायनो । cp. XXVI. 12

२ Thus B G; °मिति वाधिः Bu; मिति वाधिः U. °मित्यर्थं Be C'.

३ Thus the Viv. and cp. XXVI. 12: °मदिग्रहण Be C', °मिति-ग्रहण the other MSS.

४ Thus Be G, °दथैव C', °दथैवं Bu B U.

५ Thus B U G Bu the Viv. (one copy); चैव Be C' the Viv. (another copy).

६ °हरति Be G Bu U; °हरंति Be C'.

७ Read °पांशुं?

48. शिल्पैरुपाकरण इति ॥ स ह स्माह बौधायन उभयैनोपाकुर्याद्धविर्भिश्च शिल्पैश्चेति ॥ शिल्पैरेवेति शालीकिः ॥

48. 15. न्यूङ्खन इति ॥ विराजां[1] वा प्रतिपत्सु न्यूङ्खयति[2] मस्त्वे[3] वेति[3] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

49. 4. निर्मन्थ्यस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालीकिः ॥

दाक्षिणानाꣳ होम इति ॥ स ह स्माह बौधायनो जुहुयादेवाहुतीर्जपेत्प्रत्ययमन्त्रानित्यथो ह स्माह शालीकिर्जुहुयादेवाहुतीर्न तु[4] प्रत्ययमन्त्राञ्जपेदिति ॥ ये केच दक्षिणायुक्ता मन्त्राः स्युर्नैवैनानाद्रियेतेत्यौपमन्यवः ॥ १० ॥

पञ्चमः ॥

252. 6. अविवाक्य इति ॥ अविवाक्यमेतदहर्भवतीति बौधायनो विब्रूयादेवेति[5] शालीकिः ॥

252. 11. स्तुचामुद्धरण इति ॥ सूत्रं बौधायनस्य ॥ यथाप्रकृतिमेवाध्वर्युः कुर्याच्छन्दोगबह्वृचा एव प्रतिकुर्वीरन्निति[6] शालीकिः ॥

---

[1] विराजां G C′, विराजा Be Bu, विरजां U, विवजां B.

[2] °यंति all exc. C′.

[3] मस्त्वैवेति all.

[4] Found in Be C′ U G (sec. m.), the other MSS. om

[5] Thus corrected; विब्रू° B G. विब्रू° Bu, गुब्रू° Be C′ U (sec. m.), विर्ब्रू° U (pr. m.).

[6] प्रतिविकु° B G U (pr. m.).

इति विज्ञायते पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत दर्शं यज्ञमाग्नेयं पशुमकुर्वतेति । अथो एतदौपमन्यवस्य कल्पं वेदयन्ते प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान्निर्वपेत्तस्मादुपहितान्येव कपालानि स्युरा समभिवासनात्संसृष्टं कर्म तायते[1] । तेषामेकैकमुद्वासयेदनुसवनं येनयेन प्रचरिष्यन्स्यादपि वा अभिन्नष्टानां पिण्डानां परिग्राययीतेतरयोः[2] सवनयोर्यद्येककपालश्चिकीर्षितः[3] स्यात्प्रातःसवनिकैरेव[4] वर्तयेत्कृतान्तात्पौरोडाशिकं कर्म प्रत्याददीतेतरयोः[5] सवनयोरनुसवनमग्रात्राध्यूहनेनैव कपालेषु प्रतिपद्येत । भिद्गमत ऊर्ध्वम् ।

॥ १६ ॥ दशमः ॥

अथो एतद्बौधायनस्य कल्पं वेदयन्त उभयतःशुक्रा आदित्यंवतीर्वसतीवरीर्गृह्णीयात्ताः शुक्रास्ताभिराप्याययेत्ताभिरभिषुणुयादित्युपर्यर्धं होतृचमसं हत्येत्येतेनैवापि वतीयेन वर्तयेत्तयोरपः पूर्वया द्वारा हविर्धानं प्रपादयेद्धोतृचमसीया वसतीवरीया मैत्रावरुणचमसीया इति दक्षिणेन होतारं परिगृह्यापरया[6] द्वारैकधनानेतस्मिंश्च काले सर्वत्र एव मैत्रा-

---

1 Thus Ben, आयते C D, तायत H (reading स्यात् instead of ैयात्), वर्तयेत् G Be U (sec. m.) and the Viv.

2 इतरयोः Be G (pr. m.), उभयोः Ben C U D G (sec. m.).

3 यद्येक॰ H and the Viv., यद्येक॰ G U Ben Be; C defective.

4 ॰सवनिकै॰ G U D, Viv., ॰सवनीयै॰ the other MSS

5 उभयोः MSS.

6 परिगृह्य॰ Be U.

वहणाचमनीयाः पूर्येत्तृतीयं वसतीवरीणामवनयेत्तृतीयमेक- I. 190. 12. धनानामेवमस्य प्राक्चेवलः शुक्रो भवति । सोमपदं गृह्णीयाद्भू- त्रवर्धयकामस्येत्यनिरुक्तस्यैवैष राज्ञो ग्रहीतव्यो भवति । का उ खलु देवताः प्रथमꣳ सोमं भक्षयन्तीत्यपि इत्येव ब्रूया- द्विज्ञायत उपहूताः सोमस्य पिबतोपहूतो युष्माकꣳ सोमः पिबत्विति । क उ खलु सोमस्य सोमपीथो भवतीति । विज्ञायते यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेत्येष एवापि सोमस्य सोमपीथस्तेषाꣳ संनिपति- तानामानुपूर्वतेति[1] । निग्राभ्यासु वाचयित्वादाभ्येन चरेदथो- पाꣳशुसवनमाददीताथ राजानं निर्वपेत्सिद्धमत आग्निष्टोमिकं कर्म जानीयादा फलकयोरभिमर्शनात्फलके अभिमृश्य पृश्निभिश्चरेदथ प्राणग्रहैश्चरेदथाꣳशूनुपसंगृह्णीयादथाꣳशुना चरेदथोपाꣳशुना । काले ऽन्तर्यामेण । सिद्धमत ऊर्ध्वम् ।

॥ १७ ॥ एकादशः ॥

III. 101. 7. अथो एतद्बौधायनस्य कल्पं वेदयन्ते शाणपणस्य ग्रहणे द्वयोर्धारयोः प्रातःसवने गृह्णीयात्तिसृणां माध्यंदिने सवने चतसृणां तृतीयसवन इत्युपाꣳश्वन्तर्यामयोश्च सꣳस्रावः संततश्च शुक्र एते द्वे प्रातःसवने । संततस्यैव शुक्र शाणपणस्योदयनेन

---

१ Thus G U D, ॰पातिनाना॰ H Ben, ॰पतिनाम॰ C. ॰पोभानां Be.— ॰मानुपूर्वेवेति G U (sec. m.), ॰मानुपूर्वते H, चानुपूर्ववेति Be. ॰मानुपूर्वेवेति Ben U (pr. m.), ॰मनुपूर्ववेति C D.

च[1] तृतीया माध्यंदिने सवन । आदित्यस्थाल्यामतिग्रिह्णो[2] राजादित्यपात्रस्य च संस्राव आग्रयणस्यैवोद्‌यनेन[3] च चतुर्थी तृतीयसवने । संपूतꣳ राजानं चयेण श्रीणीयात्पयसा यजु-भिर्हिरण्येनेति । स यं कं चन ग्रहं गृह्णात्युभयत[4] उदगुभ्रꣳ हिरण्यग्रयणमेवैनं करोति । तिष्ठता ग्रहा होतव्या अन्यत्र प्राजापत्याच्च मन्थिसंस्रावाच्चेति । यथो एतच्छालीकिः कथं वेदयन्ते द्रप्सानुमन्त्रणीयाविति स्रुवाहुतीरेवैता जुहुयात्क-स्मिंस्तु खल्वेनाः काले जुहुयादिति । संततौर्ह्येतस्मिन्नेनाः[5] काले जुहुयादित्यथो एतदित्याह प्राञ्चꣳ राजानं पूतभृतमभि संपवयताद्दशाभिराधवनीयं गृहा न्युब्जतादित्युक्तसंप्रैष[6] एष ग्रैत[7] ग्रावकाग्रेभ्यो ऽवकाग्रैरपस्थाय दशाभिरेवैनं[8] गृहा न्युब्जति । ॥ १८ ॥

समानं कर्माग्निनाद्ग्रहादित्यो[9] धिष्ण्यव्याघारणसंपा-

---

१ Given by Ġ U D only.

२ •स्थाल्या अति• Ben H.

३ च om. Be G U D.

४ गृह्णीयादिति instead of गृह्णाति Be G (sec. m.).

५ संततौ• Be, सततोर्ह• H.

६ Thus Ben H, •न्युब्जः सं• the other MSS.

७ ग्रैते G U D C, ग्रवे Be, ग्रावे Ben, H. corrupt.

८ Thus G (sec. m.) U D, दशभिरेनं C, दशाभिरेवैनां the other MSS.

९ Viv.: समानं कर्माग्निनाद्ग्रहादिति यथोचये (e.g. XI. 3 : 67. 17) यथा-यमेव विधिः ।

I. 213. 20. तादित्येव समुद्देशो[1] भवति । कथमु खलु धिष्ण्यानां
यथान्युप्तं व्याघारणं भवतीति । विभुवे प्रवाहणाय स्वाहेति
व्याघार्य रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा
I. 214. 8. हिंसीरिति । यत्र हृणीत इति । होतैवैषां प्रथमो भवत्य-
हर्णेण उत्तरेभ्यस्तु प्रातःसवनिकं प्रसर्पणं कथं स्वादित्या-
दवनीयोपस्थानप्रभृतीत्येव ब्रूयात्सकृत् स्फ्यविघनानामुपस्थानं ।
I. 217. 6. कथमु खल्वेषां विसंस्थितसंचरः स्यादित्यन्तरेण होतुश्च
धिष्ण्यं ब्राह्मणाच्छंसिनश्च ये ऽधिष्ण्या । अथ धिष्ण्य-
वन्तः संस्थमेव धिष्ण्यमुत्तरेण परिक्रामेयुर्यथेमावध्वर्यू
प्रथमजौ[2] भवतः । क उ खल्वेतयोर्भक्षो भवतीति । होतृच-
मस इत्येव ब्रूयात्क उ खल्वग्निआमेकाहे सोमं न भक्षयन्ती-
त्युन्नेता यावत्तत्सुब्रह्मण्य इत्येव ब्रूयात्क उ खलु सर्वे
दीक्षिता भक्षयेयुरिति । नेष्टुश्चमस उन्नेता भक्षयेदच्छावाक-
चमसे यावत्तद्ब्राह्मणमध्ये[3] सुब्रह्मण्यो । ऽपि वा सर्व एवाग्नी-
ध्रचमसे भक्षयेयुर्विज्ञायत उत्तरस्यां ततौ[4] तेषां य एवाग्नीध्रः
स यावत्तत्स सुब्रह्मण्यः स उन्नेतेति । ॥ १९ ॥ द्वादशः ॥

I. 217. 11. III. 104. 7. यथो एतद्बौधायनस्य कल्पं वेदयन्ते समानपात्र्यामेव

---

१ °द्देशो G (sec. m.).

२ Thus H Ben (pr. m.) C D U (pr. m.), °जघिनौ Ben (sec. m.) Be G U (sec. m.).

३ °ह्मणचमसे H only.

४ See XVII. 21 : 301. 2.

सवनीयानुद्रावयेत्पुरोडाशस्यैवैषो ऽवकारो वृद्धो भवति[1]। मध्यतः पुरोडाशमुपस्तीर्णाभिघारितमुद्रावयेत्पुरस्ताद्धाना दक्षिणतः करम्भं पश्चात्परिवापमामिक्षामुत्तरतः। कथमु खल्वेषाꣳ संचरो[2] स्यादिति। प्रज्ञातो हविष्पथो ऽथापरं। पूर्वया द्वारोपनिर्हृत्यापरया द्वारा सदः प्रपाद्याग्रेण कर्तन् जघनेन धिष्णियानुत्तरेणाच्छावाकस्य धिष्णियं पर्याहृत्यान्यस्मै प्रदायैतेनैव यथेतमेत्योत्तरेण सदः परीत्य पूर्वया द्वारोपनिर्हृत्योत्तरेणाग्नीध्रीयं पर्याहृत्यान्तर्वेद्याघाद्वेदध्वर्युश्चेद्धविर्धानं[3] प्रपन्नः स्यादुपनिष्क्राम मा त्वाभिपरिहारिषमित्येव ब्रूयाद्यथो एतद्बौधायनस्य कल्पं वेदयन्ते द्विदेवत्येषूत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्याणं[4] प्रयच्छतीति यदाध्वर्युः पुरोडाशान्प्रत्यङ् हरेत्तद्धविर्धानं प्रपद्यमानं प्रतिप्रस्थातारं परिगृह्णीयाद्ग्रहावादायोपनिष्क्रामन्नुपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहावादत्ते ऽपरेण परिक्रम्याथोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे

१ °तीति. Ben.

२ Thus Ben C U and G (pr. m.) the Viv. (one copy); संचरि D H the Viv. (another copy), संचारौ Be G (sec. m.), संचरा U (sec. m.). The Viv.: संचरणं संचरो गमनं नश्यति संचरौ (°रि) मार्गः cp. XXVI. 24.

३ Thus H G (pr. m.) Kes'., the other MSS. ins. अथ before अध्वर्यु°

४ प्रतिनिधया° Ben Be and one copy of the Viv

प्रतिनिर्ग्राह्यं[1] प्रयच्छतीति । हुत्वा व्यवनीय[2] प्रदक्षिणमावृत्य[2] प्रतिप्रस्थाताध्वर्युं परिगृह्णीयादध्वर्युः प्रतिप्रस्थातारं प्रत्यङ् द्रुवन्यायेन । भिक्षुमत ऊर्ध्वमथेमे द्विदेवत्या अननुवषट्कारा भवन्ति । क्व[3] उ खल्वेषामनुवषट्कारो भवतीति । विज्ञायते द्विदेवत्यानृतुयाजान्यश्च पात्नीवतो ग्रहः । आदित्यग्रह-
III. 106. 2. सावित्रौ[4] तान्स्म[5] मानुवषट्कृथा[5] इति । यथो एतदौपम-न्यवस्य कल्पं वेदयन्ते द्विदेवत्येषु दीर्घभक्षेणैवैनाभक्षयेद्भक्षेहि[6] माविशेति प्रतिपद्य क्रत्वे दक्षाय रायस्पोषाय सुवीरताया इत्यातः । प्रत्यभिमृशते मा मा राजन्विबीभिषो मा मे हार्दि त्विषा वधीः । वृषणे शुष्मायायुषे वर्चस इत्यथानुसवनभक्षेणैव[7] सवनमुखीयाभक्षयेदिति । ॥ २० ॥ त्रयोदशः ॥

क्व उ खलु वसतीवर्या स्तोत्रभक्तिर्भवति शस्त्रभक्तिश्चेति । विप्रुड्रूपासु ह्यस्य स्तोत्रभक्तिर्भवति प्रातरनुवाके[8] ह शस्त्रभक्तिः । क्व उ खलूपांश्वन्तर्यामयोर्द्विदेवत्यानां स्तोत्रशस्त्र-

१ प्रतिनिग्रा° Ben Be and one copy of the Viv.

२ °णीयाप्रदक्षिण° G U D C.

३ क्व उ U Be Ben C, Viv., क्व G H.

४ °सावित्रं Be Ben (sec. m.), °सावित्रान् Ben (pr. m.)

५ Thus G (pr. m.) U D C and cp. Āśv. śrs. v. 5. 21 (Vait. sū. 20. 4); माजनानुवष° Ben (pr. m.), माजनाननुवष° G (sec. m.), माजामानुवष° H, ममाजनानुवष° Be.

६ °भक्षयेन्नैवै° Be G.

७ °भक्षयेनैव Be G U (sec. m.).

८ °वाको Be G C U (sec. m.).

भक्षिर्भवतीति । यदुपांशुं गृह्णाति तदुपांश्वन्तर्यामयोः प्रउग उक्थ्ये[1] द्विदेवत्यानामथायं प्रतिप्रस्थातर्युपह्वेऽध्वर्योरित्त-रतःखेवी भवतीतथाश्रुतस्य यन्तं प्रतिप्रस्थाताध्वर्युं परिह्वयी-याद्वथाध्वर्युः प्रतिप्रस्थातारं प्रत्यङ् द्रवन्पात्रेण । विद्रुमत ऊर्ध्वं । किंदेवत्या उ खल्वृतुयाजा भवन्तीत्यृतुदेवता इत्येतदेकमथापरमिन्द्रं होता यजति । मरुतः पोता यजति । ग्रावो नेष्टा यजत्यग्निमाग्नीध्रो यजतीन्द्रं ब्राह्मणाच्छंसी यजति । मित्रावरुणौ मैत्रावरुणो । देवं द्रविणोदां चत्वारो ऽश्विनाध्वर्यू अध्वर्यू[2] । अग्निं[3] गृहपतिं गृहपतिः । क्व च खल्वैन्द्राग्नस्य स्तोत्रभक्षिर्भवतीति । बहिष्पवमान इत्येव ब्रूयाद्ये के चन यज्ञा अस्तोत्राः पवमान एव[3] तेषां[4] स्तोत्राणि भवन्ति[4] । क्व उ खलु माध्यंदिनीयाः सवनीया निरुप्यन्त इति । क्षुल्लकवैश्वदेवस्य स्तोत्र इत्येव ब्रूयात्[5] तृतीयसवनीया । माहेन्द्रस्य स्तोत्र इत्येव ब्रूयात् । ॥ २१ ॥

नाराशंसमुपद्रुतं ऋतादेवैनं[6] होतृचमसाद्भक्षीया-

---

१ Thus U (sec. m.), Viv.; उक्थो G U (pr. m.), उक्थ्ये Be Ben H C. Acc. to the Viv. it is synonymous to शस्त्रे।

२ Thus G U D C; चाध्वर्यवोऽग्निं Ben H Be.

३ Thus G Be, एवैतेषां Ben D H U C.

४ भवन्तीति Ben H.

५ च खलु ins. G U D C.

६ Thus G U (sec. m.), ऋतादेवं H D C U (pr. m.), ऋतादैवैनं Ben (sec. m.) Be, ऋतादेवं Ben (pr. m.)

द्विनाराशꣳसं प्रातःसवनं च माध्यंदिनसवनं चैकनाराशꣳसं तृतीयसवनं । चत्वार्युन्नीयमानसूक्तानि[1] भवन्तीति[2] । सवनमुखेषु[3] चाच्छावाकचमसे[3] च[3] । त्रयो दीर्घभक्षाः । क्व उ खलु प्रवर्ग्यः सुत्यमहरनुसमेतीति । दधिघर्म इत्येव ब्रूयात्-
I. 234. 1. त्रिरुपसदाꣳ । सौम्यस्य परीज्येति । तिरश्चर्मन्फलके ग्राव्णो-ह्रादयतीति । अंशुभ्याभिषव इत्येतदाचक्षते । कथमु खलु रथंतरपृष्ठे माहेन्द्रं ग्रहं गृह्णीयान्महाꣳ इन्द्रो य ओजसेत्येतया गायत्र्या माहेन्द्रं गृह्णीयाद्बृहत्पृष्ठे महाँ इन्द्रो नृवदा चर्षणिप्रा इत्येतया त्रिष्टुभा माहेन्द्रमथोभयपृष्ठे[4] यथा पृष्ठं तथा गृह्णीयात्पुरोरुचमितरां कुर्यादिति । ॥ २२ ॥ चतुर्दशः ॥

कथमु खलु सवनीयस्य पशोस्पर्याया उपक्रमो भवतीतीडसूनꣳ सꣳस्तीर्य पृषदाज्यं विहृत्य[5] जुह्वाꣳ समानीयाग्रेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य संवदेताभिघारयेदाश्रावयेत्पशुं पञ्चहोत्रा चतस्रूपस्तृणीते । मनोताप्रभृतिनेडान्तेन चरेत्स्विष्टकृत ऊर्ध्वमथोक्थ्यविग्रहेषु य एव प्रातःसवनिकौ[6]

---

१ °र्युन्नीयमानानिसू° Ben H, °र्युन्नीयमानिसू° Be. °र्युन्नीयसू° C.

२ इति om. G.

३ Thus, hesitatingly, emended. सवनमुखेष्वाच्छावाकच (°कस्य°) मधीच सवनेच C U D; सवनमुखेष्वच्छावाकचमसे च सवनमुखेषु G (sec. m.); सवनमुखेष्वाच्छावाकचमसे च सवने च Be Ben; सवनमुखेच्छावाकचमसेवसवने च H

४ After माहेन्द्रम् G U D ins. ग्रहम् ।

५ Thus H, विहृत्व the other MSS. (G is indistinct).

६ °सावनीकौ or °सवनीकौ some of the MSS.

ग्रहणमन्त्रः स एव माध्यंदिनीयः स तृतीयसवनिको[१] । देवतामेव व्यञ्जयेत्समसायचमसायैव त्रींस्त्रीन्पुरोडाशशकलानुपास्येन्नव[२] होतृचमस इति । त्रयाणामेवैष उक्तो भवत्यथायमाग्रयणस्त्रयस्त्रिंशतो देवतानां गृह्यते । क उ खल्वेताः प्रदाने विज्ञायन्त इति । पात्नीवते । विज्ञायते पत्नीवत-
12. स्त्रिंशतं त्रींश्च देवानिति । कथमु खलु पात्नीवतं भक्षयेदादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दसो ऽग्निना वैश्वानरेण पत्नीवता त्वष्ट्रा पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । ॥ २३ ॥

कथमु खल्वन्तरुक्थ्यो भवतीति । प्रसिद्धं तृतीयसवन आग्रयणं गृहीत्वोक्थ्यं गृह्णीयादथैनं ध्रुवमुपस्थाप्य त्रिषूर्ध्वंपात्रेषु विगृह्णीयादुपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं यज्ञस्यायुष इन्द्रावरुणाभ्यां[३] जुष्टं गृह्णामीति । पुनर्हविरसीत्युक्थ्यस्थाली प्रत्यभिमृशति । परिमृज्य सादयत्येष ते योनिरिन्द्रावरुणाभ्यां त्वेति । तदानीमेवापरं[४] गृह्णात्युपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्था-

---

१ ०सायनीको or ०सवनीको some of the MSS.

२ Thus D G U (pr. m.) C Ben (pr. m.), ०पास्येनव H, ०पास्येरन्नव Ben (sec. m.), ०पास्येरंनव Be.

३ Nearly all the MSS. insert here and infra त्वा before जुष्टं ।

४ MSS., exc. Be once and Ben once (sec. m.), read ०परेव instead of ०परं ।

युवं यज्ञस्यायुष इन्द्राबृहस्पतिभ्यां[१] जुष्टं गृह्णामीति। पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति। परिमृज्य सादयत्येष ते योनिरिन्द्राबृहस्पतिभ्यां त्वेति। तदानीमेवापरं गृह्णात्युपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं यज्ञस्यायुष इन्द्राविष्णुभ्यां जुष्टं गृह्णामीति। नाप पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति। इमाभिरेवैनां मृष्ट्वा न्युब्जति। परिमृज्य सादयत्येष ते योनिरिन्द्राविष्णुभ्यां त्वेत्यथैनान्ध्रुवेऽवनीय होतृचमसेऽवनयेत्तोये तोयाश्चावपेच्छसे गृह्णाति। तस्य प्रस्तस्य[२] भक्ष इन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्येतेनैव वा भक्षयेदपि वा नित्यपूर्वंणादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दस इन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहूतस्योपहूतो
III. 113. 2. भक्षयामीति। अथो एतदौपमन्यवस्य कल्पं वेदयन्ते पुरस्तादिन्द्राहुती जुहुयादिन्द्राहुती हुत्वा हारियोजनं ग्रहं
I. 326. 12. गृह्णीयादित्यथ हैके चात्वालदेशेऽवभृथं निधाय दध्ना पयसा मधुमिश्रेण नैष्ययनैर्ऋजीषमभिजुह्वति यत्ते ग्राव्णा

---

१ Here begins M (see Introd. to Vol. II, p. IV).

२ Thus U M, प्रसस्य D, प्रसस्य Be, thus or प्रसस्य Ben., प्रशिर H G. om. the word altogether, प्रस C.

चिच्छिदुः सोम राजन्नित्यवभृथयजूंषि जुहोतीति[1] कतमानि खल्विमान्यवभृथयजूंषि भवन्तीति यद्देवैनदावसनीवे ग्राकलैश्चरन्ति देवकृतस्यैनसो ऽवयजनमसि मनुष्यकृतस्यैनसो ऽवयजनमसि पितृकृतस्यैनसो ऽवयजनमसीत्यवभृथा-

5. हुताविति कतमा उ खल्वियमवभृथाहुतिर्भवतीत्यप उरुम्[2] जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः । सूक्तवाके नमोवाके विधेम स्वाहेति तिष्ठन्त एवावभृथेन प्रचरेयुः

7. पराङावृत्तः प्रपदेनोदकान्तं प्रत्यस्येत्सिद्धमत ऊर्ध्वम्

॥ २४ ॥ पञ्चदशः ॥

अथायमुदयनीयसंस्थः कः कर्मण उपक्रमो भवतीति बर्हिर्यजुषा कुर्यात्पाणी संमृशीत परिस्तृणीयात्पात्राणि निर्णिज्य संसादयेद्ब्रह्माणं दक्षिणत उपवेश्याथैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यꣳ स्फ्यं निदध्यात्स्फ्यस्योपरि पात्र्यौ पात्र्यां प्रोक्षणीरवपेच्छूर्पादानप्रभृति[3] कर्मान्तस्तावत आ प्रस्कन्दनात्प्रस्कन्दनान्तं कर्म कृत्वा तिरः पवित्रमप आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपेदाज्यं[3] निर्वपेदाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वा जघनेन गार्हपत्यमौपसदायां वेद्याꣳ सन्नयजुर्भिरेतिसिद्धमत ऊर्ध्वं तस्य स्रुतसासादनं दक्षिणं परिधिसन्धिमपरं विमृज्य दक्षिणं वा परि-

---

१ See TS. VI. 6. 3. 1.

२ Thus G U M D C, वसत्व Ben हृत्व H.

३ From °वपेच्छूर्पा° unto तण्डुलान् om. G Be and Ben (sec. m.).

धिमग्रेण प्राञ्चं प्रायणीयमासादयेत्प्रत्यञ्चमुदयनीयमग्निमुखा
अथ देवता इज्यन्ते । संस्थन्त[1] उदयनीयः संतिष्ठते ॥ २५ ॥

I. 263. 2. अथ यदि पशुरुपाकृतः स्यात्पाणी संमृशीत । परि-
स्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेत्प्रोक्षणीः सꣳस्कृत्य
पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यमाद-
दीत । संप्रैषप्रभृति पाशुबन्धिकं कर्म तायते । सिद्धमत ऊर्ध्वं ।
III. 114. 17. यद्यो एतच्छालीकैः कल्पं वेदयन्ते मैत्रावरुण्यामिक्षया यजेतेति
तस्यै सह सवनीयैर्वत्सापाकरणꣳ[2] सह सायंदोहमुदयनीयेन
चरित्वा पाणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य
सꣳसादयेत्प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदथ प्रातर्दोहं
धेनूर्दोहयेदथैनां[3] गार्हपत्ये श्रपयित्वाभिघारितामुद्वासयेद-
थाज्यं[4] निर्वपेदथाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वाहवनीये
वैदृशकान्परिधीन्परिधायाथैनां[5] पुनरधिश्रित्याभिघारिता-
मुद्वास्यान्तर्वेद्यासादयेदथाग्नये सोमायेत्याज्यभागाभ्यां चरेदाज्य-
भागान्तं कर्म कृत्वा दक्षिणे वेद्यन्ते केशश्मश्रु वपते नखानि

१ Thus write G M U (sec. m.), संस्थवंतः Be U (pr. m.) C, संस्थितं H, संस्थितं D.

२ Thus M Be Ben, वत्सानामपाक० G U D C, वत्सापाक० H.

३ ०र्थे Ben (pr. m.) Be.

४ Thus H U D C G (pr. m.) Ben (pr. m.); ०त्वामभिघारितमु० M, ०त्वाभिघारितमु० G (sec. m.) Be Ben (sec. m.).

५ वैदृश० M only.

णिष्क्रमते[1] । ऽथाज्यभागप्रतिपत्केडान्ता संतिष्ठते । ऽथैतमुदव-
, 9. सानीयोपांशु भवति पुनराधेयधर्मं हि[2] । सशम्याहावेदि स्तम्बयजुषो हरणमसंनद्धा पत्नी यज्ञपुच्छमन्वास्ते । ॥ २६ ॥

षोडशः ॥

अथेममग्निचयं त्र्युपसत्कं षडुपसत्कं द्वादशोपसत्कमिति[3] चिन्वते । स यदि साहस्रं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिं सपुरीषामुपधाय संचिताहुती[4] जुहोति । द्वितीयां चितिं सपुरीषामुपधाय संचिताहुती जुहोति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिं षष्ठीं चितिं सपुरीषामुपधाय संचिताहुती जुहोत्यौपवसथिकैव तृतीयाथ यदि साहस्रं षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिं सपुरीषामुपधाय संचिताहुती जुहोति । श्वो[5] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिं सपुरीषामुपधाय संचिताहुती जुहोति[5] । स एवमेव पञ्चाहमौपवसथिकैव षष्ठ्यथ यदि साहस्रं द्वादशोपसत्कं चेष्यमाणो भवति यथापूर्वं[6] तथाथ

---

१ ०न चाज्य० Ben H.

२ Thus G Ben C D ; ०धर्माचि U. ०धर्म्यचि M, ०धर्माचिच H, ०संज्ञानाप Be.

३ ०थं चेति Ben H.

४ Here and infra some of the MSS. read ०हुतीर्जुहो० ।

५ The passage from श्वो unto जुहोति om. M Be, in G it is effaced.

६ यथापूर्वमथ H G (sec. m.).

यदि द्विषाहस्रं[1] त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ सपुरीषामुपदधाति[2] । द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ सपुरीषामुपदधाति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ[3] सपुरीषामुपदधात्यौपवसथिकैव तृतीयाथ यदि द्विषाहस्रꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ सपुरीषामुपदधाति । श्वो[4] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ सपुरीषामुपदधाति[4] । स एवमेव पञ्चाहमौ।पवसथिकैव षष्ठ्यथ यदि द्विषाहस्रं द्वादशोपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाध्यस्तपुरीष[5] एताꣳ रात्रिं वसति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य पुरीषमुपधाय संचिताहुती हुत्वाहार्याꣳ[6] सपुरीषामुपदधाति[6] ।

---

१ द्विषा॰ and द्विषा॰ the MSS. promiscue ; thus also चिषा॰, चिषा॰ ।

२ Thus Be G M, -मुपधाय the other MSS.

३ चार्यꣳ M here and infra each time.

४ From श्वो unto ॰दधाति effaced in G.

५ Most of the MSS. ins. सपुरीषाम् after चितिम्, but cp. the following chapter.

६ हुत्वा हेहे चाचार्यं सपुरीषं उप॰ M.

स एवमेव यथासूत्रं तथा वर्तमानः पुरीषंपुरीषमुपधाय संचिताकृती कृत्वाहार्याꣳ सपुरीषामुपदधात्यौपवसथिकैव द्वादशी ॥ २७ ॥

अथ यदि चित्याहस्तं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वेद्वे आहार्ये सपुरीषे उपदधात्यौपवसथिकैव तृतीयाथ यदि चित्याहस्तꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । श्वो[2] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति[2] । स एवमेव पञ्चाहमौपवसथिकैव षष्ठ्यथ यदि चित्याहस्तं द्वादशोपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाध्यस्तपुरीष एताꣳ रात्रिं वसति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य पुरीषमुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । स एवमेव यथासूत्रं तथा

१ कृत्वा द्वेद्वे आहार्ये सपुरीषे उप॰ M

२...२ Effaced in G.

वर्तमानः पुरीषंपुरीषमुपधाय संचिताङ्गती कृत्वा द्वे आहार्ये सपुरीषे उपदधात्यौपवसथिकेव द्वादशी । कथन्नु[1] खल्वन्तरुपसत्कं बहिरुपसत्कमन्तर्बहिरुपसत्कमिति विजानीयाद्वै । यस्य संवत्सरस्य द्वादशावशिष्य राजानं क्रीणीयात्सो ऽन्तरुपसत्कः । संवत्सरे पर्यवेते राजानं क्रीणीयात्स बहिरुपसत्को । दैवस्य संवत्सरस्य षडवशिष्य राजानं क्रीणीयात्तस्योपसदः स्युरुत्तरस्य षड्हाः सो ऽन्तर्बहिरुपसत्कः । ॥ २८ ॥ सप्तदशः ॥

II. 1. 8. मृदमेतां समां बिलेन करोतीति[2] । समां[3] भूम्यां
II. 1. 16. निदधातीत्येवेदमुक्तं भवत्यथैतावश्वगर्दभावुत्तरत उपस्थापयति[4] पुरस्ताद्वा प्रत्यञ्चौ । स यदि पुरस्तात्प्रत्यञ्चौ दक्षिणो ऽश्व उत्तरो गर्दभो । ऽथ यद्युत्तरतः पूर्वो ऽश्वो[5] ऽपरो[5] गर्दभो । ऽग्निभ्यः पशूनालभत इति । पश्चानां पशूनां ब्राह्मणं भवति । स यद्यु[6] हैतान्पशूनुपाकरोत्या बर्हिष उपासनात्पाशुबन्धिकं कर्म वर्तयित्वा शिरांसि प्रच्छिद्यापो देहानभ्यवहरेयुरपो

१ Thus U G (pr. m.) C Ben (pr. m.) H M D, कच G (sec. m.) Ben (sec. m.)

२ इति given by G U and a citation in the Mahāgnisarvasva.

३ समां D H U (pr. m.) C, समं M U (sec. m.) Ben (sec. m.) Be.

४ Thus (singul.) U (sec. m.) the Viv. and the Mahāgnis., plural the other MSS.

५ Thus (ऽश्वोऽपरो) M D C U (pr. m.) the Viv. and Ms., ऽश्वउत्तरतो Be Ben G U (sec. m.); H corrupt.

६ यद्य M. (i.e. *yady aha*).

देवानभ्यवहरन्तीति विज्ञायते । मासमेतं[1] ब्रह्मचर्यं चरति सो ऽधःसंवेश्यमांसाश्यस्त्र्युपायी भवति पूर्वदीक्षेत्येतामाचक्षते[2] । यथोदयमेवैतं मासमभि दीक्षमाणो मन्यते । ऽथ कृष्णाजिने यजमानं वाचयति मुष्टी चैव न करोति वाचं च न यच्छतीति । कृष्णाजिनप्रभृति कर्मान्त एष भवत्यावेदनात्प्रथमायामुपसदि वेदिं विमिमीते[3] स्तम्बयजुर्हरतीति । कर्मवग्रकारितमेवैतद्भवत्यथ[4] संभारेषूषान्निवपन्यददसन्नमधि कृष्णां तन्मनसा ध्यायेत्तदपीहेति । ॥ २८ ॥

उत्तरमुत्तरं प्रति बलीवर्दमुत्तरामुत्तराꣳ सीतां कृषन्त्सर्वौषधं वपन्स्वयमातृण्णावकाशं नावकामेदित्यथ[5] द्वैधे[6] पुरुषे च स्वयमातृण्णायां च साम गायन्ति । किमु खलु स्वयमातृण्णानिकोतं भवतीति । हिरण्येष्टका मण्डलेष्टका रेतःसिगित्येव ब्रूयाद्यमिष्टकागणमुपदध्यात्तं न व्यवेयाद्दक्षिणेन दक्षिणमुत्तरेणोत्तरꣳ । स यदि दक्षिणतः पुरस्तादिष्टका उपदध्यादपसलैरावर्ततोथ यद्युत्तरतः पश्चाद्वा प्रदक्षिणमावृत्य स्वयमातृण्णामेवाभिमुख इष्टका उपदध्यात्कृत्तिका उपदधा-

---

१ Thus D C M (sec. m.) Ben Ms ; मासमेकं Be H G U M (pr. m.).

२ पूर्वा दी॰ Ben H.

३ मिमीवे Ben H.

४ एव om. M G D C ; ॰नद् instead of हनद् Ben (sec. m.) Be.

५ वावका' M D C H U (pr. m.) Ms ; नातिका° G U (sec. m.) Be Ben.

६ All the MSS. ins. भृवे, only Ms. om.

तीति। कतमा उ खल्विमाः कृत्तिका भवन्तीति। विद्युत
इत्येव ब्रूयादस्तवणार्थं[1] बौधायनस्याग्नावग्नौ पुनश्चितिः। षष्ठ
सा न पुरीषचितिः षष्ठ्या चित्या दृष्टिजेति। दृष्टिजैवेति
II. 45. 17. शालीकिः। षष्ठं प्रच्छादमाहरमाणः कस्मिन्नु खल्वेनत्काल
आहरेदिति। नक्षत्रेष्टका उपधायेत्येव ब्रूयात्स चिभिः कर्म-
भिरभिप्रैति पुरीषस्योपधानेन साहस्रवता प्रोक्षणेन धेनुकरणे-
नेति। सो ऽष्टाभिः कर्मभिरभिप्रैत्युत्तमे संचिताहुती शत-
रुद्रीयं नमस्काराः परिषेचनं विकर्षणꣳ सर्पाहुतीः सामभिरु-
पस्थानमनुशꣳसनमिति। ॥ ३० ॥ अष्टादशः ॥
III. 133. 1. अथ किं[2] नानाबीजानां निर्वपणे तन्त्रमिति[2]। स्रुगादानं
तन्त्रꣳ शूर्पादानं तन्त्रं [3]धूःप्रभृतयः शकटमन्त्राः सर्वं तन्त्रं
भवत्या[4] सावित्राद्बीजंबीजमभ्यावर्तते सावित्रं। तन्त्रं
दशहोताभिप्रव्रजनं परिदानमिति तन्त्रं भवति। तन्त्रं
कृष्णाजिनावधवनं तन्त्रमुलूखलाध्यूहनं तन्त्रं पुरोडाशीयाना-
मावपनं तन्त्रं मुसलस्यावधानं तन्त्रꣳ शूर्पस्योपोहनं तन्त्रꣳ

---

१ °हारवता° some of the MSS. and the citation in Viv.; but cp. the vivaraṇa itself: ववति वै सा नाꣳ स्वयन्तीमिति (TS. v. 4. 10. 3) द्दोपविरत्वर्या पुनश्चितिरिति।

२ किं and इति only given by U (sec. m.) G (sec. m.), Ms.; the other MSS. om. these words.

३ Before धूः° M Be Ben D C G (pr. m.) ins. प्रत्नोषधं प्रत्नोषधं or प्रत्नोषधं (i.e. प्रत्नोषधं ?).

४ Thus H Bo G D C Ms; भवंत्वा Ben U M.

हविष्कृदावपनप्रभृतिमन्तो बीजंबीजमभ्यावर्तते प्रस्कन्दनान्तो । यथो एतच्छालीकेः कल्पं वेदयन्ते सह स्विष्टकृतात्याक्राम्(?)ेदित्येकादशप्रयाज एवैतदुपपद्यते न पञ्चप्रयाजे । यथो एतदौपमन्यवस्य कल्पं वेदयन्ते पुरस्तात्स्विष्टकृतो यावदाम्नातेनाभिषिञ्चेत्राच कृष्णाजिनं न दर्भौ न पार्थानि भवन्ति कुशानेव संस्तीर्य तेष्वेनमभिषिञ्चेदिति[1] । कथमु खलु सत्त्रिणामभिषेक आवर्तत इत्यभिषेक आवेदनं प्रथमे ऽह्न्यभिषेकः प्रथमे ऽह्न्यश्वस्यावघ्रापणमादितश्चान्ततश्च बहिष्पवमान मास्तावे स्तुवीरन्नहरहर्यज्ञायज्ञियस्य[2] स्तोत्रे द्वाभ्यामभिमृशेदिति । ॥ ३१ ॥

कथमु खल्वेकादशिनानां[3] पशूनां चर्याया उपक्रमो भवतीति । ऽवस्तूनं संस्तीर्य पृषदाज्यं विहृत्य शुक्रां समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य संवदेताभिघारयेदाघादयेत्पशुं[4] पञ्चहोत्रा चतस्रूपस्तृणीते । मुख्यस्य पशोर्दैवतमवदाय[5]

---

१ Corrected acc. to the Dvaidha; तेष्वेवैनम॰ MSS. (वेषुवैन॰ M. तद्यैवैन॰ H).

२ Thus, with the Saṃhitā, G Be Ben, ॰यज्ञीय॰ H U D M C.

३ Thus(खल्वेका॰) MSS. (एकादशिनीनाम् M.).

४ ॰दाघादये॰ not found in Be and effaced in Ben, but cp. XXV. 23, init.—पशुं seems, here and further on, to have been changed into पशून् in G.

५ ॰दैवतम॰ M U Be, the Viv., ॰दैवतम॰ H G D C Ben.—After ॰दाय M. ins. चच ।

वृक्यमेदो यूषमवधाय तेन जुहूं प्रोर्णुयाद्यूष्णोपसिच्याभि-
घारयेदथोपभृति स्विष्टकृते[1] सर्वेषां व्यङ्गाणाᳲ सकृत्सकृत्स्वि-
ष्टकृते समवदाय वृक्यमेदो यूषमवधाय तेनोपभृतं प्रोर्णुया-
द्यूष्णोपसिच्य[2] नाभिघारयेदथ[2] हृदयं जिह्वां वक्षस्तनिम
मतस्नौ[3] वनिष्ठुमिति[4] पात्र्याᳲ[5] समवधाय यूष्णोपसिच्य
नाभिघारयेदथ कᳲसे वा चमसे वा वसाहोमं[6] गृहीत्वा
यूष्णोपसिच्याथाभिघारयेत्संप्रेष्यत्पशुं । पार्श्वेन वसाहोमं
123. 13 प्रयौयाम्मᳲसः[5] कुम्भतो । जघनेनोत्तरवेदिं परिक्रम्याश्रावये-
द्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहुयात्परिग्निᳲ-
ध्याच्च दिग्भ्यो । ऽथेतरद्वसाहोमहवन्याᳲ समवनयेद्वषट्कृते हवि-
र्जुहोति । सो ऽनिष्ट्वैव स्विष्टकृतमुदङ्ङत्याक्रम्य जुह्वां चैव
वसाहोमहवन्यां चोपस्तृणीते । द्वितीयस्य पशोर्दैवतमवदाय
वृक्यमेदो यूषमवधाय तेन जुहूं प्रोर्णुयाद्यूष्णोपसिच्याभि-
घारयेदथोपभृति[1] स्विष्टकृते सर्वेषां व्यङ्गाणाᳲ सकृत्सकृत्सम-
वदाय वृक्यमेदो यूषमवधाय तेनोपभृतं[7] प्रोर्णुयात्समवत्त-

---

१ Not given by G U D M.

२ ॰सिच्याभिघा॰ G, ॰सिच्यानाभिघा॰ H.

३ Thus D Ben C U (pr. m.), मतस्नू G M U (sec. m.), मतस्न H.

४ Thus we ought to read also IV. 9: 123. 7.

५ Here and further on the MSS. write ंसः ᳲसः ंसः ंसः ᳲसः ।

६ ॰सैतयो॰ M.

७ After ॰भृतं G H M ins. यूष्णोपसिच्य नाभिघारयेत्, U ins. यूष्णो-पसिच्य नाभिघारयेदथ हृदयं जिह्वां वक्षस्तनिम मतस्नु वनिष्ठुमिति पात्र्याम् ; C is incomplete.

मेतद्यूष्णोपसिच्य[1] नाभिघारयेत्तथैव[2] कꣳसे वा चमसे वा वसाहोमं गृह्णीयाद्यूष्णोपसिच्येदथाभिघारयेत्संम्रोत्पशुं । पार्श्वेन वसाहोमं प्रयौयान्मꣳसतः स्रुग्वतो । जघनेनोत्तरवेदिं परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता. वसाहोमं जुहुयात्परिशिꣳष्याच्च दिग्भ्यो[3] । वषट्कृते हविर्जुहोति । स एवमेव सर्वेषां पशूनाꣳ । स यत्र वारुणस्य स्विष्टकृते ऽवद्येत्तर्हिरभिघारयेत्समवत्तमेवैतद्यूष्णोपसिच्याभिघारयेत्तथैव कꣳसे वा चमसे वा वसाहोमं गृह्णीयाद्यूष्णोपसिच्याभिघारयेत्संम्रग्रेत्पशुं । पार्श्वेन वसाहोमं प्रयौयान्मꣳसतः स्रुग्वतो । जघनेनोत्तरवेदिं परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहुयात्परिशिꣳष्याच्च दिग्भ्यो । ऽथेतरद्वसाहोमहवन्याꣳ समवनयेद्वषट्कृते हविर्जुहोत्यथ पुरस्ताद्वनस्पतेः समान्यो दिशः प्रतियजेदथ वनस्पतिना चरेदथ स्विष्टकृता । सिद्धमत

3. ऊर्ध्वं । यथो एतदौपमन्यवस्य कल्पं वेदयन्ते मैत्रावरुणामिक्षया निरूढया यजेतेति सिद्धमथौपवसथिकं कर्म जानी-

8. याद्यथामावास्यायाꣳ संनयतो ऽन्यत्र पिण्डपितृयज्ञात्संवत्सरं

---

1 समवत्तमेवैत° M, समवत्तमेतद् D: Ben om. समव° unto °घारये° (1. 2).

2 एव om. M. probably rightly.

3 Between दिग्भ्यो and वष° M H Ben U ins. तथैव कंसे वा चमसे समवनयेद्, in Ben and U these words are effaced; G (partly secunda, partly prima manu) तथैवेतरद्वसाहोमहवन्यां समवनयेद् ।

न कंचन प्रत्यवरोहेन्न शीर्षमांसं खादेन्न वयसां मांसं
नाग्निं चित्वा रामामुपेयान्नाग्निचिद्वर्षति धावेद्यदि[1] धावेदु-
पावर्तेताश्रयमेवाभ्युपावर्तेत[1] इति ब्राह्मणम् । ॥ ३२ ॥
एकोनविंशः ॥

II. 63. 8. अथास्मिन्वाजपेये सप्तदशानाꣳ रथानां त्रयस्त्रयो ऽश्वास्त्वे-
I. 63. 11. कपञ्चाशतमुत्तरतः प्रष्टिं नियुञ्ज्याच्चतुर्विꣳशतिं[2] पशूनि-
II. 64. 4. त्यग्नीषोमीयस्यानूबन्ध्यस्य चतुर्विꣳशौ भवतो । ऽथ वै भवति
सावित्रं जुहोति कर्मणःकर्मणः पुरस्तादिति । दीक्षणीयां
निर्वप्स्यन्सावित्रं जुहोतीति । सावित्रादेव सावित्रं भवति ।
II. 64. 7. दीक्षाहुतीर्होष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा दीक्षा-
II. 64. 8. हुतीर्जुहुयात्प्रायणीयां निर्वप्स्यन्सावित्रं जुहोतीति । सावि-
ib. 9. त्रादेव सावित्रं भवत्यन्तर्हिरण्याꣳ[3] होष्यन्सावित्रं जुहो-
ib. 10. तीति सावित्रꣳ हुत्वान्तर्हिरण्यां[4] जुहुयात्पदेन चरित्वा
राजानं क्रीत्वोपातिथ्यं निर्वप्स्यन्सावित्रं जुहोतीति । सवि-
ib. 11. त्रादेव सावित्रं भवति । प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरिष्य-
न्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा प्रथमाभ्यां प्रवर्ग्योप-
ib. 13. सद्भ्यां प्रचरेन्मंहावेद्यै पूर्वं परिग्राहं परिग्रहीष्यन्सावित्रं
ib. 14. जुहोतीति । सावित्रꣳ हुत्वा स्फ्यमाददीताहवनीयं प्रणेष्य-

---

१ यदि धावेद् om. most of the MSS.

२ Thus G (sec. m.), °विंशतिः Be, °विंशतं Ben, °विंशं D H M G (pr. m.), विंशं U C.

३ °ण्यां G (pr. m.) U (sec. m.) Ben H ; °ण्ये Be U (pr. m.) M.

४ °ण्यां U (sec. m.), °ण्ये the other MSS.

न्सावित्रं जुहोतीति । सावित्रꣳ हुत्वेध्ममाददीत रथवाहने सदोहविर्धाने संमेष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा रथवाहने सदोहविर्धाने संमिनुयादग्नीषोमौ प्रणेष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वाग्नीषोमौ प्रणयेत् । यूपमुच्छ्रयिष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा प्रोक्षणीराददीत । स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरिष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा बर्हिषी आददीत । तस्य प्रचिह्नं वपया चरित्वा वसतीवरीर्ग्रहीष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा कुम्भमाददीत । पशुपुरोडाशं निर्वप्स्यन्सावित्रं जुहोतीति । सावित्रादेव सावित्रं भवति । ॥ ३३ ॥

5. द्रूपरश्चतुरश्रिर्भवतीत्यनुदिशमन्नौ[1] स्थापयित्वाग्निष्ठां च
6. सूर्यस्थां च संमिनुयात्पञ्चैन्द्राणतिग्राह्यान्गृह्णातीति[2] । सर्व
2. एवैते सोपयामा ग्रहीतव्या भवन्ति । मारुत्या प्रचर्यैतान्सं-
स्थापयेदिति । तन्त्रमुल्मुकहरणं तन्त्रमभिप्रैषो ऽभ्यावर्तेत[3]
संस्थाहोम ऊर्ध्वे[4] बर्हिषी[4] भिन्द्यात्स्वाहाकृतिप्रैष आज्यं द्वेधा
9. विभजेदुभयभागिन्य स्रोकीया । अथेदꣳ रथचक्रं प्रादेशमात्रं

१ Thus Ben H, °न्नौः the other MSS.

२ Before सर्वा° Ben H Be ins. पञ्चान्; the word is missing in M D C and effaced in G.

३ Corrected; °वर्तेत U, °वर्तीत Be, °वर्तेते the other MSS.

४ Thus G U (sec. m.) H Ben (pr. m.), ऊर्ध्वबर्हिषि Ben (sec. m.) C, ऊर्ध्वबर्हिषी Be, वोर्ध्वबर्हिषी M.

II. 75. 8. भूमेरच्छिन्नं[१] भवत्यपरेण परीत्य पञ्चमी संन्ह्यतीति रथचक्रे
II. 79. 1. एवैते संन्ह्यत्यथाह्वाजिसृतो[२] दक्षिणापथेनोपातीत्येति सूत-
ib. 2. राजन्या एवैत उक्ता भवन्ति[२] । माहता अग्रेणाहवनीयं परी-
ib. 14. त्येति क्षत्तसंग्रहीतार एवैत उक्ता भवन्त्यथ यजमानं तार्प्यं
परिधापयतीत्याज्येनैवैतत्तूप्तं[३] वासो भवत्यथाप्युदाहरन्ति दृपा
नाम दृष्णाख्येषामेवैतद्भवत्यथेमं वाजपेयं सर्वसप्तदशमेके[४]
ब्रुवत[५] । आदेशादेव सप्तदशामेकविंशं वैष्णवीषु शिपिविष्ट-
वतीषु स्तुवीरन्निति[६] । ॥ ३४ ॥ विंशः ॥

॥ इति पञ्चविंशः प्रश्नः ॥

---

१ ०च्छिन्नं M Ben C.

२ After संन्ह्यति and भवन्ति some of the MSS. इति ।

३ Thus M, ०वैततप्तं D C, ०वैतंतप्तं G U Ben, वैतंतप्तं Be, वैतेंतप्तं H.

४ Thus G Ben Be, पर्वस० M, सर्वसप्त० H U ; D C om. सर्वे ।—Before एक Be U D M ins. एव ।

५ ब्रुवतेत M.

६ कुर्वन्ति instead of स्तुवीरन्निति M C.

अथायं राजसूयो ऽर्धसप्तदशैर्मासैः संतिष्ठते ऽर्धषोडशैर्वा । तस्मिन्नग्निष्टोमसंस्थाः पञ्चैकाहा[1] अहीनो द्विरात्रः । षट्छाला[2] । अष्टौ यूपाः षड्वाग्निष्टोमिका द्विपशौ[3]पशुबन्धे[3] सौत्रामण्यामष्टमस्तावन्त एवावभृथाः । क उ खलु हविषो हविर्निरुप्यत इत्यनुमत इत्येव ब्रूयात्कृष्णं वासः कृष्णतूषं दक्षिणेति । कृष्णाद्यमित्येवेदमुक्तं भवति । काममिष्ट्वा पशुबन्धेनेति । संतन्येद्वाग्रयणेन वा पार्वणेन वा यजेत । कथमु खलु साकमेधप्रघीति । महारात्रे पूर्वा संततिः श्वो भूत उत्तरा प्रदोषे । किमु खल्वसमुदितं भवतीति । प्रागनूयाजिकात्संप्रैषादित्येव ब्रूयाद्बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृह इति । योऽन्यो याजमानासंयुक्तो[4] ब्राह्मणो[5] भवति । भगाय चरुं वावातायै गृह इति । यान्या महिष्या[6] एव[6] सुभगा भवति । नैर्ऋतं चरुं परिवृक्त्यै गृह इति । दुर्भगैवैषोक्ता भवति । पौष्णं चरुं

---

१ Thus M only; पंचरे काच H. पंचारेकाचा (i.e. पञ्च चत्र एकाहाः ?) पंचारेकाच Ben U, पंचारेकाचिनो Be.

२ शाला MSS.—द्विरात्रश्चैका the Vivaraṇa.

३ Thus G (sec. m.) and the Viv. पशुपशुबंधे Be. °पशूपशुबंधे G (pr. m.) Ben U H, °पशूपशूपशुबंधे M.

४ Uncertain reading; याजमानासं° M Be Ben. याजमानसं° H U G (pr. m.), याजनसं° G (sec. m.). The Viv.: योन्याजमसंयुक्तः and यजमानासंयुक्तः ।

५ After ब्राह्मणो Ben G H U ins. भवा, M भव; this word is missing in Be and has been effaced in G and Ben.

६ Conjectural reading. महिष्येव H Be U Ben. महिष्येष M, महिषं G (omitting एव).

भागदुघस्य गृह इति । महानसिक[1] एवैष उक्तो भवत्यथाप्युदाहरन्ति यो भागधाभौ[2] दोग्धि स एवैष उक्तो भवति । द्वादशाहेन[3] रत्निनाꣳ हवीꣳषि । यथोदन्ने[4] मैत्राबार्हस्पत्यं । ह्यसो ऽवभिष्ट एतस्यैव[5] पूर्वपक्षस्य । तस्मिन्संततनीभ्यां यजेताथ चेदुक्थ्ये ऽभिषेचनीये ऽग्निं चिन्वीतैतस्मिन्नेव द्विरात्र आग्निकानि सावित्राणि उलोखाः संभृत्य पशुशीर्षाणि च वायव्येन पशुना यजेत । ॥ १ ॥

II. 97. 7. अपां पतिरसीत्यपांपतीयाः । समुद्रियाणामेवैता उक्ता भवन्ति । महतामोज स्थेति निवेष्याः[6] । आवर्तानामेवैता[7] उक्ता भवन्ति । सूर्यवर्चस स्थेत्यभिद्रुम्याः[8] । प्रसन्नानामेवैता उक्ता भवन्ति । शक्करी स्थेति[9] गोल[10] जरायोरेवैता[10] उक्ता भवन्ति ।

II. 111. 15. सो ऽयैवाग्नेयेनाष्टाकपालेन यजेतेति । सद्यः संतिष्ठमान उक्थ्य एतत्सूक्तं भवत्यथ चेदतिप्रवर्धेत तदानीमेवाग्नेयेनाष्टाकपालेन

---

१ Thus Be Ben (sec. m.); माहानसिक G (sec. m.) and one copy of the Viv; महानासिक H U G (pr. m.) Ben (pr. m.) and another copy of the Vivaraṇa; महानासोक M.

२ °भौ M Ben, °भि Be H G U.

३ मासो M.

४ °दन्नो M. दन्नो all the other MSS.

५ एव om. M.

६ Thus G U M, °वेष्या Be Ben, °वेषा H.

७ चाहनानां or चाहनानां MSS.

८ Thus all, against चभिद्रुम्या: of the text proper.

९ गोल्ब्या seems to have fallen out.

१० Conjecturally; गोल्जरायो° M, गावजरायो° G (pr. m.), गावप्यायो Ben (sec. m.), गारप्यायो Ben (pr. m.), गारजरायो° H Be U, गाप्या-रयो G (sec. m.).

यजेत। स्तो भूते सारस्वतेन। इत्यद्गाय चमसमभिसंज्ञानत इति। षोडशमये षोडशाहमये च सप्तदशाधेतरेषु नवनव प्रसर्पणप्रभृतय एवैते भवन्त्युपसोमाना। अथायं प्रतीचीन-स्तोमः केशवपनीयो ऽतिरात्रः षोडशिको भवति। तस्य त्वग्निष्टोमिकानि स्तोत्राण्यावृत्तानि भवन्त्येकविंशो बहिष्प-वमानः सप्तदशान्याज्यानि माध्यंदिनस्य पवमानः पञ्चदशानि पृष्ठान्यार्भवस्य पवमानस्त्रिवृद्यज्ञायज्ञियमित्यथ प्रतीचीन-स्तोमाय केशवपनीयायातिरात्राय दीक्षते। तस्य षड् दीक्षाः षडुपसदस्तयोदश्यां प्रसुतश्चतुर्दश्यामुदवसानमथैतस्मिन्नेव पक्षा-वसाने व्युष्टये द्विरात्राय दीक्षते। स एतां चैकाष्टं रात्रिं पूर्वपक्षस्य दीक्षितो भवति द्वे चापरपक्षस्य। तासां द्वादशो-पसदो। ऽयोपवसथ्योपवसथीये ऽन्यमावास्यायां पूर्वमह-र्भवत्युत्तरस्मिन्नुत्तरमिति। संतिष्ठते व्युष्टिर्द्विरात्रो०। ऽथो-त्तराष्टं ग्रासामध्यवस्येदथ मथित्वाग्नीन्विसृज्योदयनीयायाग्नि-

---

१ Thus Ben. एवते M, इते H Be G U.

२ Thus M G (sec. m.). °र्भवतिच Ben, °र्भव the other MSS.

३ चच om. H Ben.

४ Thus M only, व्युष्टि the other MSS.

५ Thus G (sec. m., first hand invisible) and the Viv., which comments: ऋतौयप्रभृतीनाम्: तसांस H U, तसार्सां Be, तस्य M, Ben, defective.

६ Thus, hesitatingly, emended; चोपवसथ्यथाम्योपवसथ्योभयतिमासा° G (pr. m.). चोपवसथ्यथार्मोपवसथ्यममावा° Ben, चोपवसथ्यमायमावा° G (sec. m.), चोपवसथाघाम्योपवसथ्योमावा H Be M (the last only °वसे-मवा°), चोपवसथाघाम्योपवथ्योमावा° U.

७ Thus, here and further on, M only; °द्विद्वि° all the other MSS.

ष्टोमाय[1] दीक्षते। तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः। संतिष्ठत एष[2] उदयनीयो[2] ऽग्निष्टोमः सहस्रदक्षिणो ऽथैतस्मिन्नेव पक्षावशेषे क्षत्रस्य धृतिमाभिविधत्ते[3] देविकाहविर्भिस्त्रैधातवीयया सौत्रामण्येति। संतिष्ठते राजसूयो ऽर्धसप्तदशैर्मासैरथ शाक्तीकैः केशवपनीयान्तैः ऽर्धषोडशाः[4]।

॥ २ ॥ प्रथमः ॥

अथातो ऽञ्जसवः। प्रसिद्धमेव प्रथमो ऽर्धमासः संतिष्ठते। पञ्चाहेन चातुर्मास्यानि द्व्यहेन संततौ अष्टमे ऽहनीन्द्रतुरीयं नवमे ऽह्नि पूर्वाणि देविकाहवींषि दशमे ऽह्न्युत्तराण्येकादशे[5] द्वादशे त्रयोदश इति त्रिषंयुक्तैश्चतुर्दशे वैश्वानरो द्वादशकपालः पञ्चदशे वारुणो यवमयश्चरुरिति मासो। द्वादशाहेन रत्निनां हवींषि त्रयोदशे मैत्राबार्हस्पत्यं द्व्यहेन संततौ अर्धमासेनाभिषेचनीय उक्थ्य इति द्वौ मासावर्धमासेन सप्तदशो दशपेयो ऽर्धमासं दीक्षितो[6] दीक्षितव्रतीति त्रयो मासा। अर्धमासेन प्रतीचीनस्तोमः केशवपनीयो ऽतिरात्रो ऽर्धमासेन व्युष्टिर्द्विरात्र इति चत्वारो मासा। अर्धमासेन क्षत्रस्य धृतिरिति। ते ऽर्धपञ्चमा। अथ शाक्तीकैः। सप्ताहेन

---

१ Thus M; °विहृतोदयनीयाया° or यया° the other MSS.

२ इयमुपसदयामीया Ben.

३ Thus G (sec. m.) and the Viv.; °भिधत्ते Be U, °भिविधत्ते Ben, °भिधीयते M.

४ Thus M Be G (sec. m.), °षोडशः H U G (pr. m.), °षोडश Ben.

५ ऽह्न्युत्त° Be Ben.

६ Effaced in M.

पवित्रो ऽग्निष्टोमः स एवमेव पञ्चावशेषꣳ सिद्धमा वारुणाद्वादशाहेन दक्षिणाꣳ हवीꣳषि त्रयोदशे मैत्राबार्हस्पत्यं द्व्यहेन संतनी इति मासो ऽर्धमासेनाभिषेचनीय उक्थ्यो ऽर्धमासेन सप्तदशो दशपेय इति द्वौ मासावर्धमासेन प्रतीचीनस्तोमः केशवपनीयो ऽतिरात्रो ऽर्धमासेन व्युष्टिर्द्विरात्र इति चत्वारो मासा अर्धमासेन क्षत्रस्य धृतिरिति ते ऽर्धचतुर्था अथ पतन्तको द्वादश दीक्षा द्वादशोपसदः सप्ताहो ऽहीनो राजसूयो यथावकाशमितरै राजसूयहविर्भिर्यजते ऽथ देविकाहविर्भिर्यजते ऽथ त्रैधातवीयया यजते ऽथ सौत्रामण्या यजते संतिष्ठते राजसूयः ॥ ३ ॥ द्वितीयः ॥

अथेममिष्टिकल्पं पञ्चदशसामिधेनीकं च सप्तदशसामिधेनीकं च समामनामस्तत्र[1] सिद्धं[1] याजमानं बौधायनस्य कल्पो[2] यथाम्नायꣳ शास्तीके स्तीꣳ सूचानुब्रूयादिति त्रिः प्रथमामनूच्य तिस्रो ऽनन्तरा अनुब्रूयात्त्रिरुत्तमां ताः[3] पञ्चदश[1] पञ्चदशानुब्रूयादित्येकादशेमाः[3] सामिधेन्यः समामनामस्तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां ताः पञ्चदश सप्तदशानुब्रूयादेकविꣳशतिमनुब्रूयाच्चतुर्विꣳशतिमनुब्रूयात्त्रिꣳशतमनुब्रूयाद्द्वात्रिꣳशतमनुब्रूयात् षट्त्रिꣳशतमनुब्रूयाच्चत्वारिꣳशतमनुब्रूयाच्चतुश्चत्वारिꣳशतमनुब्रूयादष्टाचत्वारिꣳशत-

१ तत्र प्रविष्टं M.

२ कल्पे M.

३ Thus corrected; ताः पंचदश सप्तदशानु° M Bo U H. ताः पंचदशानु° Ben; in M सप्तदश is effaced and G is defective.

मनुब्रूयादिति धाय्यालोक एता धातव्या भवन्त्याग्नेय्यः सर्वा
गायत्र्यः । सर्वाणि छन्दाꣳस्यनुब्रूयादपरिमितमनुब्रूयादिति
धाय्यालोक एवैता धातव्या भवन्ति । नैताः सर्वा गायत्र्यो ।
गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग्याज्या । पुरस्ताल्लक्ष्मा
पुरोऽनुवाक्या भवत्युपरिष्टाल्लक्ष्मा याज्या । मूर्धन्वती पुरोऽनु-
वाक्या भवति नियुत्वत्या यजत्युपाꣳशुयाजमन्तरा यजतीति ।
दर्शपूर्णमासयोरेवैतदुपपद्यते नान्यत्र । ॥ ४ ॥ तृतीयः ॥

अथेमाः काम्या इष्टयो निष्पुरीषेणैव प्रयोक्तव्या भवन्ति ।
स[१] संवत्सरं पयोव्रतः स्याद्द्वादशाहं वा यावद्वा[२] शꣳसीत[२] ।
तासां याः समानसंयोजना एकां चेत्तासां निर्वपेत्सर्वा एवैता
निर्वप्तव्या भवन्ति यथो एतदनायुक्तो[३] ऽग्निपरिचरो ऽन्यमुद्धृत्य
पुनरप्युद्धरति । कथमत्र प्रायश्चित्तꣳ सिध्यती३ न सिध्यती३
इति । सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति ।
निर्दिष्टभागो वा एतयोरन्यो ऽनिर्दिष्टभागो ऽन्य इत्युभावु[४]
II. 125. 3. खल्विमावनिर्दिष्टभागौ भवतो । नैव सिध्यतीति । तस्य
दृष्टेरादानं । गार्हपत्यमकाशाद्धृष्टिमाददीत । तयाहवनीये[५]
वैश्वानरस्य कपालान्युपदध्यात् । प्रदक्षिणमावृत्य गार्हपत्ये मारुतस्य

१ Found in Ben H, the other MSS om. the word
२ Thus G ; तावद्वा द्वांसीत Be. यावत्द्वाशंसीत M U ; यावत्द्वादशसीत H
याव — — सीत Ben
३ Thus Ben Be G (sec. m.) ; ॰नुयुक्त H G (pr. m.) U ; ॰नुयुक्तो M.
४ Thus G M U ; उभाउ H Be ; Ben defective
५ तया॰ G (sec. m.).



# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1445.

## बौधायन श्रौतसूत्रम् ।

## BAUDHĀYANA ŚRAUTA SŪTRAM

A SANSKRIT WORK ON THE VEDIC LITERATURE.




EDITED BY
DR. W. CALAND,
UTRECHT.

VOL. III. FASCICULUS IV.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRES
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1921.

# ASIATIC SOCIETY OF BENGAL,

**No. 1, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

*The Society's Agents—*

MESSRS LUZAC & Co., 46, *Great Russell Street, London, W.C.*

M. PAUL GEUTHNER, 13, *Rue Jacob, Paris, VI*e.

*Complete copies of those works marked with an asterisk * cannot be supplied as so[me] of the Fasciculi are out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | A |
|---|---|---|
| | 3 | |
| Açvavaidyaka, Fasc. 1–5 @ -/10/- each | 2 | |
| Advaitachintā Kaustubha, Fasc. 1–4 @ -/10/- each | 6 | |
| Agni Purana (Text), Fasc. 4–14 @ -/10/- each | 1 | |
| Aitareya Aranyaka of Rig-Veda (Text), 2–4 @ -/10/- each | | |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–5; Vol. III, | 14 | |
| Fasc. 1–5, Vol. IV, Fasc. 1–8 @ -/10/- each | 2 | |
| Aitareyalocana | 4 | |
| Amarakosha, Fasc. 1–2 | 2 | |
| *Anu Bhasyam (Text), Fasc. 2–5 @ -/10/- each | 1 | 1 |
| Anumana Didhiti Prasarini, Fasc. 1–3 @ -/10/- each | 1 | |
| *Aphorisms of Sandilya (English), Fasc. 1 @ 1/- | 3 | 1 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1–6 @ -/10/- each | 2 | |
| *Atharvana Upanishads (Text), Fasc. 2–5 @ -/10/- each | 1 | 1 |
| Ātmatattvaviveka, Fasc. 1–3 | | |
| Avadāna Kalpalatā (Sans. and Tibetan), Vol. I, Fasc. 1–13; Vol. II, | 24 | |
| Fasc. 1–11 @ 1/- each | 1 | 1 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1–2; Vol. II, Fasc. 1 @ -/10/- each | 2 | |
| Bauddhastotrasangraha | | |
| *Baudhāyana Śrauta Sūtra, Fasc. 1–3; Vol. II, Fasc. 1–5; Vol. III, | 7 | |
| Fasc. 1–4 @ -/10/- each | 2 | |
| *Bhamati (Text), Fasc. 5–8 @ -/10/- each | 0 | 1[illegible] |
| Bhasavritty | 5 | |
| Bhāṭṭa Dīpikā, Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–2 @ -/10/- each | 4 | |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1–7 @ -/10/- each | 1 | |
| Brahma Sutras (English), Fasc. 1 @ 1/- | 1 | |
| Bṛihaddevatā, Fasc. 1–4 @ -/10/- each | 3 | 1[illegible] |
| Bṛihaddharma Purāṇa, Fasc. 1–6 @ -/10/- each | 1 | |
| Çatadūṣaṇī, Fasc. 1–2 @ -/10/- each | 8 | |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–4 @ 2/- each | | |
| *Çatapatha Brāhmaṇa, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5; Vol. III, | 14 | |
| Fasc. 1–7; Vol. V, Fasc. 1–4 @ -/10/- each | 3 | 1[illegible] |
| Ditto Vol. VI, Fasc. 1–3 @ 1/4/- each | 3 | |
| Ditto Vol. VII, Fasc. 1–5 @ -/10/- | 1 | |
| Ditto Vol. IX, Fasc. 1–2 | | |
| Çatasahasrikā-prajñāpāramitā, Part I, Fasc. 1–18, Part II, Fasc. 1 | 11 | 1 |
| @ -/10/- each | | |
| *Caturvarga Chintāmani, Vol. II, Fasc. 4–25; Vol. III, Part I, Fasc. | | |
| 1–18, Part II, Fasc. 1–10; Vol. IV, Fasc. 1–6 @ -/10/- each | 35 | |
| | 1 | |
| Ditto Vol. IV, Fasc. 7 @ 1/4/- each | 1 | 1 |
| Ditto Vol. IV, Fasc. 8–10 @ -/10/- | 8 | |
| [illegible] Fasc. 1–7 @ 1/4/- each | 7 | |
| [illegible]ba (Text), Fasc. [illegible] 17 @ -/10/- each | | |

कृतानि पिष्टानि समुप्य[1] संयुत्य[1] व्यभिमृश्य[1] पिण्डौ[1] कृत्वाग्रेण[1] मारुतस्य पिण्डं पर्याहृत्याहवनीये वैश्वानरमधिश्रव्यात्प्रदक्षिणमावृत्य[2] गार्हपत्ये मारुतं त्वचं ग्राहयित्वेमं त्वचं ग्राहयेदमुं पर्यग्नि कृत्वेमं पर्यग्नि कुर्यादमुꣳ श्रपयित्वेमꣳ श्रपयेदपि वोभयमेवोभयत्र कुर्यात्तस्य शृतस्यासादनं दक्षिणं[3] परिधिसंधिमपरं[4] विमुच्य दक्षिणं वा परिधिमग्रेण। सिद्धमत ऊर्ध्वमेतस्मिन्वा एतौ मृजाते यो विद्विषाणयोरन्नमत्तीतीतरमितरेणेत्येवैष[5] उक्तो भवति। यं मृधोऽभि प्रवेपेरन्राष्ट्राणि वाभि समियुरिति। प्रतिवेश्या राजानो मृधः। स्व एव जनपदा[6] राष्ट्राणि विशो। यो हतमनाः स्वयंपाप इव स्यादिति। मति बले हतमनाः स्वयंपाप इव स्यादिति। साधुरूपे कुले स्वयंपापो। यस्मै प्रत्तमिव सन्न प्रदीयेतेति।

१ Thus Be M; संयुत्यव्यूह्याभिमृश्य I G. समुप्यसंयुत्यपिंडौ कृत्वाग्रेण Ben, संदृश्यव्यभिमृश्य H.

२ Thus [illegible] अधिश्रव्यात् Ben, अधिश्रयान् M. अधिश्रयात् G H P अधि- श्रव्यात् Be. cp XXVI 6 279. 9 अधिश्रयन: it is synonymous to अधिश्रयात्।

३ Om Ben

४ Thus all the MSS. exc M [illegible] परिधिसंधिमन्वपरं. [illegible] अपरं to be cancelled? A p[illegible]

५ Thus G [illegible] °अन्नमत्तीतरमित रेणेत्येव I [illegible] °अन्न[illegible]मितरमितरेणेत्येव Ben, °अन्नमत्तीत[illegible]तीतरेणेत्येवैष M अन्न[illegible]मितरेणेत्येव एवैष Be, मितरेणेत्येव H [illegible]

६ वा ins. G.

II. 128. 17. प्रस्तमनुपाहृतं[1] प्रतिबध्यमानमेवैतद्भवत्यथास्यामध्वरकल्पाया-
मिडाग्नं[2] प्रथमं तन्त्रं कुर्याद्देवं द्वितीयं। तृतीयेन सहावशेषं
वर्तयेत्कथमत्र भक्षा इति। तत्रतत्र वा भक्षयेदपि वा
II. 130. 4. सर्वासाꣳ समवदाय कृत्वान्ततो[3] भक्षयेदनग्नान्होत्रा देय इति।
II. 130. 7. यजमानस्यैवैष गौष्ठाहातव्यो भवति। वेदिं परिगृह्यार्धमुद्ध-
II. 131. 6. न्याद्धं नेति। दक्षिणं वा वेदेरर्धमपरं वेत्यैन्द्रस्यावदाय
वैश्वदेवस्यावद्येदथैन्द्रस्योपरिष्टादिति। द्वे एवैते अवदाने उक्ते
II. 131. 9. भवत। उपाधाय्यपूर्व्यं[4] वासो दक्षिणेति। प्रवेणतो[5]
वान्ततो वा तार्प्याणि वा नीलानि वा सूत्राण्युपहितानि[6]
II. 131. 13. भवन्त्यपि वोपधानरज्जुरेवैषोक्ता भवत्यथास्याꣳ संज्ञानेष्याꣳ[7]
सकृदेवानुवाचयेत्सकृदाश्रावयेद्द्वे त्वस्यै याज्यानुवाक्ये भवतः।
॥ ५ ॥

१ Thus Be; °मनापहृतं M G (pr. m.), °मनापापहृतं Ben H U; °मनापाहृतं G (pr. m.); °मनापाहृतमप्रति °G (sec. m.)

२ Thus (प्रतिबध्यमान°) M G U, प्रतिबध्य° the other MSS. (G चप्रतिब° sec. m.).

३ Thus Ben, कृत्वातातो G U M, कृत्वातितो H.

४ Thus (cp. XIII. 20 : 131. 5) M only, उपधाय्य° the other MSS and the Viv.

५ Thus M Be, प्रतिवेषतो Ben. प्रवतो H, प्रवयतो G U, प्रवत: the Viv. (both copies).

६ Thus Ben M Be °चतानि G H U.

७ Thus Ben Be U G, संज्ञान्येष्यां M H; the correct reading seems to be (see XXIV. 3 : 187. 7) संज्ञानीष्यां।

अथ वै भवति यदि नावगच्छेदिममहमादित्येभ्यो[१] भागं निर्वपाम्यामुष्मादमुष्यै विशो ऽवगन्तोरिति निर्वपेदिति निरुप्योपरमति[२]। परिदानान्तं कर्म कृत्वाथैतानग्नौ कृष्णाजिने समुप्योत्तरार्धे ऽग्न्यगारस्यासञ्जयेद्यथावगते संसादयेत्प्रोक्षणप्रभृतिना कर्मणा प्रतिपद्येत। सिद्धमत ऊर्ध्वं। यथा नखनिर्भिन्नायामेवं व्रतकृष्णलायां। पुरा वा तण्डुलानामावपनाद्रुक्ममवदध्यात्कृतमुत्तरमपि[३] वैनं शृतमेव सुवर्णरजताभ्यां रुक्माभ्यां परिगृह्यात्सर्वथासादयेदाग्नेयस्य च सौम्यस्य चैन्द्रे समाश्लेषयेदिति। व्यभिमृष्टानां पिण्डानां पुराधिश्रयणात्समाश्लेषयितव्यं[४] भवति। सर्वेषामभिगमयन्नवद्यतीति[५] सदैवतस्य[५] सस्विष्टकृत्कस्येत्येवेदमुक्तं[६] भवत्यथो खलु यावतीः समा एष्यन्मन्येत तावन्मानं स्यादिति। त्रिंशद्वर्षस्येत्स्यात्सप्ततिमानं कुर्वीत। चत्वारिंशद्वर्षस्येत्स्यात्षष्टिमानं कुर्वीते स एवैतस्याभि-

१ इदम् instead of इमम् Be Ben H M.

२ Probably इति has fallen out.

३ अवदध्यात् Ben M, उपदध्यात् Be G U H.

४ Thus (°धिश्रयणात्) M G (sec. m.), °धिश्रजनात् U H G (pr. m.), °धिंजनात् Be; Ben is defective; cp. अधिश्रयणात् XXVI. 5: 277. 2. Bhavasvāmin gives the periphrase: प्रागधिश्रयणात्।

५ Thus U G Ben; °नीतिसदैवस्य M, °नीतिसदैवतस्य H, °तितीदैवतस्य Be.

६ Thus M only; सस्विष्टकृतस्यें° Be, सस्विष्टकृतस्ये° or स्विष्टकृतस्ये° the other MSS.

II. 142. 12. वृद्धिकल्पो[1] ऽथ ब्राह्मणेषु च संज्ञानेष्ट्यां[2] च सहदेवानुवाच-
II. 142. 16. चेत्सहःदाश्रावयेत्सहत्मदानाः समानदेवता । आपोनप्त्रीयं चरुं
पुनरेत्य निर्वपेदिति । को नु खल्वपां नपाद्भवतीति । वैद्युत
II. 145. 12. इत्येव ब्रूयात्सहःणमधु चेति । पौत्तिकमित्येवेदमुक्तं[3] भवत्यन-
स्थिगधमिति । चिवल्लीकमित्येवेदमुक्तं[4] भवत्यथाप्युदाहरन्ति
II. 149. 13. चिच्छदिक्कमित्येवेदमुक्तं[5] भवति । यथा चिधातावेवं[6]
संदिग्धपुरोडाशस्यावदानकल्पः । ॥ ६ ॥ चतुर्थः ॥
II. 152. 2. स सर्पानसृजतेति । मासा एवैत[7] उक्ता भवन्ति । स
II. 155. 10. वयांस्यसृजतेति । छन्दांस्येवैतान्युक्तानि भवन्ति । स वैव
II. 155. 13. स्यादिति । पुराणगार्हपत्यमभ्युपदिशन्ति । तस्य पशुवेलाया-
मुल्मुकमादाय दक्षिणया द्वारोपनिर्हृत्य दक्षिणेन सदः परीत्य
दक्षिणेन मार्जालीयं धिष्णियं पर्याहृत्यान्तरेण यूपं चाहव-
नीयं चोपातिहृत्यान्तरेण चात्वालोत्करावुदङुपनिर्हृत्य तेन
पशुं श्रपयेयुरथ यदाहवनीयादुल्मुकं स्यादपया तत्सहा-

---

१ सतस्य om. M ; Ben Be are defective here.

२ संज्ञान्येष्टां again M G U H, see above.

३ पौतिक॰ M Ben, चौत्तिकं the Viv. (one copy), पौतीक॰ G U, पौचौक H Be and another copy of the Viv.

४ ॰चलीक॰ Ben H, ॰वल्मिक॰ Be M G U.

५ Thus Ben ; चिचद्दीत्ये॰ M, चिचद्दित्ये॰ Be, चिविचतीत्ये॰ H G U.

६ चैधातावेवं Be, चिधातवेवं M, चि (or चे॰ चै॰) धातवौयेवं the other MSS.

७ Thus M only, एवैता all the other MSS.

हरेयुः । किंदेवत्यानि खल्वपाव्यानि भवन्तीति । द्वे प्राजा-
पत्ये आग्नेयं वायव्यं वैश्वदेवमितीष्टर्गो वा अध्वर्युर्यजमान-
स्येष्टर्गं इत्युष्णायमित्येवेदमुक्तं[1] भवत्यथाप्युदाहरन्त्यध्वर्युरेवैष
उक्तो भवत्यासन्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्या इत्यनु-
व्याहारो ह[2] वा आसन्यो मन्त्रस्तस्मान्मा पाहीत्येवेदमुक्तं
भवति । तस्माद्यजवास्तु नाभ्यवेत्यमित्यहोरात्रावित्येकं । याव-
दग्नयः प्रीताः[3] स्युरित्येतदेकं । यावदेनमभिवर्षेदित्येतदपरं ।
द्वौ समुद्रौ विततावजूर्यावित्यहोरात्रावेवैतावुक्तौ भवतः ।
पर्यावर्तेते जठरेव पादा इत्युदरे पादा इत्येवेदमुक्तं भवति ।
तयोः पश्यन्तो अतियन्त्यन्यमपश्यन्तः सेतुनातियन्त्यन्यमित्यहः
पश्यन्तो अतियन्ति रात्रिं स्वप्नेन सेतुनातियन्त्यन्यमिति ।
19. द्वे द्रधसी सततो वस्त एक इत्यादित्यो ऽहोरात्रे वस्त इत्ये-
वेदमुक्तं भवति । तिरोधायैत्यसितं वसानः शुक्रमादत्ते अनु-
हाय जार्या इति । रात्रिं वसानस्तिरोधायैति शुक्रमादत्ते
ऽहरित्येवेदमुक्तं[4] भवति । कीटावपन्नस्येति । कतमो नु
खल्वयं कीटो भवति[5] । य एवैष पिण्डान्संवर्तयतीति । नित्ये

१ Thus (उष्णायम्) M G U H and the Viv. (periphrase: हर्वीं वा उष्णं वा); उष्णय॰ Be, उ–य॰ Ben.

२ Only given by M Be.

३ All the MSS. om. the visarga and Be reads प्रिता।

४ ऽहरि॰ MSS.

५ इति ins. M G U

ग्रहणे वैष्णवीमृचमनुवर्तयतीति। पृषदाज्य एवैषानुवर्तयितव्या[1] भवति[2]। ॥ ७ ॥

II. 171. 8. अथातो ऽतिग्राह्यान्व्याख्यास्याम। इमे न्वेव[3] पृष्ठ्यातिग्राह्याः पञ्चैन्द्रा वाजपेये। परःसामानस्त्वार्वाक्सामानश्च सौर्यौ वैषुवते। वैश्वकर्मणादित्यौ गवामयने। प्राजापत्यो महाव्रते। बार्हस्पत्यो बृहस्पतिसवे। वैमृधे चोद्भिदि च त्विषिमति च वृषा सो अंशुः पवत इति च। द्वावश्वमेधे महिमानावादेग्रादेवाश्वस्य वपां महिमाभ्यां[4] परिजुहुयात्। कथमु खलु परःसाम्नां भक्षो भवतीति। [5]इन्द्रवद्गणस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसो ऽङ्गिरोषधीभिः पीतस्यौषधीभिः प्रजाभिः पीतस्य प्रजाभिः प्रजापतिना पीतस्य मधुमत उपहूतस्योपहूतो[5] भक्षयामीत्येष एवार्वाक्सा-
II. 177. 18. मानामाहृत्तो भक्षो। ऽष्टाप्रूड्ढिरण्यं दक्षिणेत्यष्टापिचकमित्येवेदमुक्तं[6] भवति। द्वौ चेद्गर्भौ स्यातां द्वादशप्रूट् स्यादेको च

---

१ Thus M; नुवर्ति(र्तौ)तव्या Be G H, °नुवर्तयितव्यं U, नुवर्तव्या Ben.

२ इति ins. M G U.

३ नेव MSS.; the Viv. points to न्वेव।

४ Thus (with °भ्या°) all (only मनीषां Ben), also the Vivaraṇa.

५ ... ५ Thus acc. to the Viv. and cp. Āp. XXI. 21. 4. The MSS. more or less corrupt.

६ Thus Be G U; ॰ष्टापचक° M; °ष्टापूतिपिचक° H; Ben altogether corrupt. Is पिचक = पिचक ? or are we to read पुलाक ? The same word occurs VII. 6 : 209. 18.

महाकोश: स्याह्वाववान्तरकोशौ स्यातामंथाश्विगर्भाया[१] श्वास्ये-नैवैतान्यश्वानि[२] समुदायुत्य मध्यमेन पर्णेनान्तःपरिधि निन-येद्भूर्भुवः सुवरिति । ॥ ८ ॥ पञ्चमः ॥

यद्यालब्धायामश्वो भवतीत्यालब्धायां चेदश्वः स्यात्तᳪस्था-पयेद्देवाथ चेदुपाकृतायामश्वः स्यादन्यमेतस्मिन्स्थान उपाकृत्यो-त्तरममेधसंपन्नमेतयागमयेरन्नित्यथेमे[३] अथा अश्वाताना[४] राञ्जत[४] इत्याहिताग्नेस्वानाहिताग्नेश्चान्यत्र विहाराद्दृष्टा भव-न्त्यभिसमारभ्यान्त्वेवैनानाचार्याः[५] प्राक् स्विष्टकृत उपजुहुत्यष्टौ वसव इति । कतमे नु[६] खल्विमे वसवो भवन्तीति । पृथिव्य-न्तरिक्षं द्यौरग्निर्वायुरादित्यश्चन्द्रमा आप इत्येतेऽष्टौ वसव एतेषु वा इदᳪ सर्वं प्रतिष्ठितं यदिदं किंच । य एवं वेद प्रत्येव तिष्ठत्येकादश रुद्रा इति । प्राणा एवैत[७] उक्ता भवन्ति । द्वादशादित्या इति । मासा एवैत[७] उक्ता भवन्ति । पञ्च गृह्यन्ते नवनव गृह्यन्ते पञ्चधा विगृह्यन्ते । नवनवाᳪश्वो

१ Uncertain reading; °गर्भाया the Viv.; °गर्भयाजमाध्येना° Ben, गर्भ-याजमाध्ये° M, °गर्भमाध्येना° Be G U, गर्भामाध्येना° H.

२ °श्वानि G Be and the Viv., °श्वौनि M U Ben, °श्विनि H.

३ Thus (°त्तरममेध°) M, °त्तरंमेध° or °त्तरमेध° the other MSS., but cp. the Vivaraṇa: उत्तरश्चिन्मेधवर्जिते ।

४ Thus M; अथा अश्वातानाबाञ्ज° Be G U, अथाश्वातानाबाञ्ज° Ben H.

५ Thus, in accordance with the Viv., G; °पिसमारंभा° M Be, °विसमारंभा° U Ben H.

६ Om. M.

७ Thus both times M and G (sec. m.); इवैता the other MSS.

भवन्त्यथ य एष 'दशमो मन्त्र एतेषामेवैषो ऽभिग्रहणार्थो[१]
I. 192. 10. दृष्टो भवति । तां दुग्ध्वा ब्राह्मणाय दद्यादथास्यामं नाद्या-
II. 196. 2. दिति । भैषाय प्रत्यवस्थितायैवैषा दातव्या भवति । किंदे-
वत्या उ खल्वतिरिक्तसोमा[२] भवन्तीति । यं यज्ञमभ्यतिरि-
च्येरंस्तद्देवत्या[३] एव स्युरित्येतदेकमथापरं । विज्ञायत उ
खल्वेषां[४] ब्राह्मणमथ कस्मादैन्द्रो यज्ञ आ संस्थातोरित्येतस्मा-
II. 199 5. दैन्द्रावैष्णवा एव भवन्ति । तेन प्रीतीभवता यज्ञस्य संस्थां
काङ्क्षेयुरिति । यज्ञब्राह्मणमेवैतद्भवत्यथ यदहःसंयोग[५] एव-
मापद्येत[५] यथापि नव मध्यमानि सांवत्सरिकाण्यहानि संनि-
गच्छेयुस्तदानीमेवैनं प्रीतीकृत्वा संचिनुयुरथ यदुदयनीये
ऽतिरात्र[६] एतदेव[६] । प्रजा वै सत्त्रमासत तपस्तप्यमाना अजु-
ह्वतीरिति । तत्पृच्छन्ति[७] कतमत्तत्सत्त्रं[८] भवतीति । यदेवै-

---

१ Thus M and the Viv.; all the other MSS. ग्र° instead of भि°

२ तिरिक्तः सोमो भवतीति M. Ben (the last without इति), °तिरिक्त-सोमा भवंतीति the other MSS.

३ °देवता MSS.

४ Thus G M U H; च.स्त्विषां खल्वे Be, खल्वेब्राह्म Ben. The last reading seems to point to खल्वेकेषां ब्रा°, cp. the Viv.: खल्वेषां ब्राह्मणम्; but the Brāhmaṇa here cited is to be found TS. III. 3. 7. 3.

५ Thus M and the Viv.; °संयोगं एवमा° G U, संयोगमेवमा M Be H.

६ Thus M; तिरात्रे एतदेव H U (sec. m.) तिरात्रमतदेव G U (pr. m.), तिरात्रोतदेव Ben, तिरात्रिषवैतेव Be.

७ इच्छंति M only (cp. XIV. 1 : 152. 5), इच्छति all the other MSS.

८ Thus corrected; कतमत्त° M Be U H, कतमत्सत्त्रं Ben G (sec. m.).

तदुनाहितान्यो वृथाश्रमं मान्यन्येतत्स्य[1] भवतीति ।

॥ ६ ॥ षष्ठः ॥

आश्विनं प्रागाश्विनमिति । कियन्तु खल्वाश्विनं भव-
तीति । [2]द्वियोजनं वा यावद्वाश्वो ऽह्ना गच्छेद्विस्तावा[3] वेदि-
र्भवतीत्याग्निकस्य प्रक्रमस्य चतुरश्रकृतस्याष्टायामानमाददीत ।
स प्रक्रमः स्यात्तेन वेदिं विमिमीतापि वा विंशत्याश्च
रथाक्षाणामेकविंशत्याश्च पदानामष्टाङ्गुलस्य च[4] चतुर्विंशं
भागमाददीत । स प्रक्रमः स्यात्तेन वेदिं विमिमीते ।
चित्तावो[5] ऽग्निर्भवतीति[5] । त्रयः सप्तविधाः । स एकविंशति-
5. विधो । ऽथैतौ ह्रदौ मध्यतो देवयजनस्य जोषयत इति ।
किमर्थौ[6] खल्विमौ ह्रदौ भवत इत्यवभृथावन्यो दक्षिण
18. आवभृथिक उत्तरो । द्वौ दायावनुजाये च पुत्रो ऽन्याधेयाये
चेति । यो ऽस्य पितुरनुजायाः पुत्रः स पुरस्ताज्जयत्यथ यो
19. ऽस्य मातुरन्याधेयाये पुत्रः सो[7] ऽपरो[7] । जरत्पूर्वया सव्यं
8. जानु वेष्टयित्वेत्युपधानरज्जुरेवैषोक्ता भवति । शतं वै[8] तस्या

1 Thus Ben H U G (pr. m.). मान्यंवेतस्य M माम्यं वेतत्स॰ Be G (sec. m.).

2 कियत्तु खलु ins Be M, कथं नु खलु H.

3 स्तावाग्ने॰ M Be.

4 च given only by M and G (sec. m.), cp. XXX. 4 s fin.

5 चित्तावाग्वेदिर्भ॰ M Be, चित्तावावेदिर्भ॰ H.

6 नु ins. Ben.

7 Thus G M Be; सोसौ H U, सोयमो Ben.

8 Are we to supply वै also XV. 5: 209. 8 or to accept that the Karmānta points directly to T Br. III. 8. 9. 3?

II. 209. 11. राजपुत्रा इति । प्रतिहिता एवैत उक्ता भवन्ति । अतनू[1] II. 211. 5. राजान[1]उग्रा इति । राजन्या एवैते नाभिषेच्या[2] भवन्त्यथ सावित्रमष्टाकपालं प्रातर्निर्वपतीत्येषैव[3] प्रथमा सावित्री । वैश्वदेवपदृषि द्वितीयापराह्णे तृतीयै तद्वैकाहिकं कर्म आग्नीध्रादुत्तरतस्य देवयजनादुदवस्येच्चातुर्मास्यिकानां पशूना- II. 217. 18. मेवं[4] वायव्याय[5] पशव एवं तूपराय[6] । सन्नाह्यान्यतरयेष्ट्या यजत इति । कथमत्र भक्षा इति । तत्रतत्र वा भक्षयेदपि वा पुरस्तादेवैतस्मै सन्नाह्याय । यूपमाज्नाये[7] राज्जुदालमग्निष्ठं[7] मिनोतीति । श्लेष्मातक इत्येवेदमुक्तं भवत्यथाप्युदाहरन्ति राज्जुदालमग्निष्ठं मिनोति भ्रूणहत्याया अपहत्यै । पौतुद्रवावभितो II. 223. 5. भवतः पुण्यस्य गन्धस्यावरुद्ध्या इति । तृतीयं दक्षिणानां ददातीत्याग्निकानामु[8] ह[8] तृतीयं कामप्रेण सह तृतीयमतिरात्रे II. 223. 14. तृतीयं । चतुष्टोम एव भवति[9] । चतुश्चत्वारीय[10] एष[10] चतुष्टोमो भवति । ॥ १० ॥

---

१ Read अतमराजान ?

२ Conjectural reading; नाभिसेच्या M, नाभिषिच्या the other MSS.

३ Thus G Ben; M om. एव. reading लेषा; °त्यवैवैव U H, त्येवेवैव Be.

४ मेव M G U.

५ °वायै Be H U.

६ इति ins. M.

७ Reading and interpunction dubious; °आयेराज्जु° M, °आयेनराज्जु° G, आयेन् राज्जु° the other MSS.

८ Thus G M Be; °कामामुदाहृतं U H, Ben defective.

९ इत्येके ins. M only.

१० °रीया एष G and the Viv.; °रीयाएव M Be, °रया (for °या) ऐव Ben U H.

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेति । कथमु खल्वेतामनुवाकामुज्जुहुयादिति । यथाप्रकृत्यस्तथानन्तरायꣳ[1] होतव्यास्तु विꣳशतिꣳ रशना आदाय यूपानभ्यायन्ति चतस्रश्चतस्र इतरे परिकर्मिण इति[2] । कथमेतास्तु नियुञ्ज्यादित्यश्वस्तूपरो गोमृग इति ते त्रयः समानरशना । ऐन्द्राग्नेषु तिस्रः । पर्यङ्ग्येषु पश्वाग्नये ऽनीकवते रोहिताञ्जिरनड्वानित्येतेष्वष्टौ[3] । सोमाय स्वराज्ञे ऽनोवाहावनड्वाहावित्येतेषु सप्तथैतेषां त्रयस्त्रयः समानरशना । मुख्यस्यैवैषां चतुर्थी भवति । समानं कर्मा पर्यग्निकरणात्पर्यग्निकृतानामेतेषां पशूनामूनविꣳशतिरुत्सृज्यन्ते[4] एकचत्वारिꣳशतमतिशिष्यन्ते । द्विचत्वारिꣳशतमेषाꣳ[5] शाखा[6] भवन्त्यश्वे[7] ऽत्र° द्वौ समासं गच्छतो । ऽथेतरेषां प्रतिपशु[8] संपद्यन्त[9] इन्द्राग्निभ्यामोजोदाभ्यामुष्टाराविति ।
6. प्राशज्ञावेवैतावुक्तौ[10] भवतो । ऽथैतस्मिन्कल्मलिमर्षं[11]

१ ०तथानंतराय MSS. (only G : ०नंतरा sec m. and M : ०नथांतरायं)।

२ इति supplied by me.

३ ०त्यितिवेष्वष्टौ G U Be.

४ जव om. M, जना read Be U.

५ श्वेषां instead of एषां G U H.

६ Thus M; शखा G Be, शाखा Ben U H.

७ Thus M Be G (sec m); ०श्वेन Ben, श्वत U H.

८ Thus Be G, ०पशूꣳ or ०पशुं the other MSS.

९ ०पद्यते Ben H.

१० Thus G M Be; सप्रसंख्या० Ben, सप्रासंख्या० U H.

११ Thus (ब्रह्मलिमर्षं चा० ) M, ०ब्रष Be Ben H U, ०नवाशुपि० G (sec. m.).

माषपिष्टानि[1] संयुत्येत्याणुकानामेवैतानि व्रीहीणां पिष्टानि
ग्रल्मसिद्धेमणा संयुतानि[2] भवन्ति । पृथक् प्रतिप्रस्थातारो ऽव-
II. 240. 4 द्यन्ति । तेषां मैत्रावरुणा एवानुब्रूयुस्तान्यैवैतानि प्रदानानि[3]
भवन्तीक्षुवर्दाय स्वाहा बलिवर्दाय स्वाहेति । सूर्याचन्द्रमसा-
वेवैतावुक्तौ भवतो । ऽथाप्युदाहरन्ति संवत्सरो वा इक्षुवर्दः
II. 242. 5. परिवत्सरो बलिवर्द इति । तस्य मूर्ध्नि जुहोति[4] जुम्बकाय
स्वाहेति । किंदेवत्या उ खल्वियमाहुतिर्भवतीति । वारुणी-
I. 242. 10. त्येव ब्रूयात्किंकिदीविर्विदीगय इति । विदिदिहीविकीदी[5]ह
II. 243. 4. किकिदीविर्भवति । पृषत उ[6] पतंगो[6] विदीगयो[6] । ऽथैता-
न्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमाश्विनमिति । यमा एवैते छागाः
समानयोनयो भवन्ति । तेषामुक्तं चरणं यथैकादशिनानां
II. 244. 2. पशूनां । किंदेवत्या उ खल्वृतुपशवो भवन्तीत्यृतुदेवता
इत्येतदेकमथापरमाग्नेयाः प्रथमा ऐन्द्रा द्वितीया वैश्वदेवा-
स्तृतीया मैत्रावरुणाश्चतुर्था बार्हस्पत्याः पञ्चमाः साविनाः षष्ठाः
संवत्सराय निवक्षस इति प्राजापत्याः ॥ ११ ॥ सप्तमः ॥

---

१ Thus ( मसमसिसर्वं चा॰ ) M, ॰मष Be Ben H U, ॰बषाम्रपि॰ G (sec. m.).

२ संयुता Ben, संयुतानि the other MSS.

३ om. Be.

४ All the MSS. exc. G ins. इति ।

५ Wholly uncertain reading. I have accepted the reading given by Be; विदीदिवीविकी M, विदिदूवहीकिदी U, विदिदिवहीकीदी H, विद - - दिवाहति Ben, विहिभिः किहिवेति G (sec. m.).

६ Thus Be, उपंगोविंदी॰ M, उपपतंगोविदी॰ the other MSS.

अथायं द्वादशाह उभयविधो भवत्यहीनो वा सत्त्रं वा ।
स[1] यद्यु[1] हैको[1] दीक्षते ऽहीनो भवत्यथ यदि बहवः सत्त्रं ।
यदि चैवाहीनो यदि च सत्त्रमुभयथैवोभयतोऽतिरात्रो भव-
त्यन्यतरतो ऽतिरात्रा अहीना भवन्त्युभयतोऽतिरात्राणि
सत्त्राण्यादशाहादेवोभयतोऽतिरात्रो ऽहीनो भवत्यादशाहात्तु[2]
सत्त्रमनतिरात्रं यथैतदग्निष्टोमायनꣳ सारस्वतमयनं[3] विश्व-
7. सृजामयनमिति । कथमु खल्वेषाꣳ संनिवापः स्यादिति ।
आविचेभ्यः प्रथमꣳ संनिवपेरन्हुत्वा आविचाणि विषमारोहा-
ग्निहोत्राणि जुहुयुरथ .वायव्याय पशवे संनिवपेरन्वायव्येनेष्टा
विषमारोहेणैवाग्निहोत्राणि जुहुयुरथ यदि[4] दीक्षणीयायै
संनिवपेरꣳस्तेषां तत्तन्युप्तान्येव[5] स्युर्युद्वसानीयाद्युद्वसायैव[6]
प्रतिवेशा यज्ञपुच्छानि कुर्वीरन्कथमु खलु संदीक्षिता विष्णु-
क्रमान्क्रमेरन्निति । महापाशाभिपरीता[7] वा क्रमेरन्नपि वा

---

१ Thus Ben, संयद्येको the other MSS.

२ Before चादशाहा G (sec. m.) ins.: चादशाहादनतिरात्रोऽहीनो भवति; the Viv. makes no mention of these words.

३ Thus U G (pr. m.) Ben, °सत्तामयनं the other MSS, only H: सारस्वतायनं।

४ यद्द M G U H.

५ तनत् instead of तत् G U, वेतत् H.

६ आर्दुदवसाना॰ Ben, स्युर्युदवसानीयान्नु (यु) दव॰ Be M, स्यादवसानीयाद्वसाय H, स्युदवसानीयाद्युदवसाय G; cp. Āp. XXI. 2. 15.

७ Thus, hesitatingly, emended; ॰पाशाभिःपरीता MSS. and the Viv.

पात्राणभिसंधित्वाभिक्रमः[1] स्यादथाह[2] क्रमस्वाथाह[2] क्रमस्वे-
II. 247. 1. III. 164. 1. 'त्यतिगृह्यस्तथा[2] कल्पः स्याद'थो एतत्सूत्रं भवति षष्ठ्यामुपसद्यु-
त्तरवेदिꣳ संनिवपन्त्यपि[3] वैकादश्यामि'त्यनग्निचित्य एवैतदुप-
II. 247. 11. पद्यते न साग्निचित्ये ' कथमु खल्वेषामहीनसंततिर्भवतीति '
वसतीवरीणामभिग्रहणेनाध्वर्युः संतनोति भावर्हिषो रूपकल्पनेन
च पयसां विग्रासनेन च वाचो[4] यम्येन[4] ब्रह्मातिप्रैषेण होता
पुनरभ्यासेन च सुब्रह्मण्ययोद्गाता[5] यज्ञस्य पुनरालम्भेन यज-
मानः[6] ' प्रचरन्त एवैतद्ध्रुवाज्यꣳ समादधते ' ऽथेमानि सव-
नानि बर्हीꣳषि संचिनुयुस्तेषां प्रहाराच उत्यायाग्नीध्र
आज्यानि गृह्णन्तो व्यवयेरन्निति ' ॥ १२ ॥ अष्टमः ॥

II. 248. 3. कथमु खलु दिवा प्रातरनुवाकस्याह्न उपक्रमो भवतीति '
तत्पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य
राजानं काले वसतीवरीरभिगृह्याहीनसंततिं कृत्वा प्रावो-
वाचयꣳ संप्रचाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं

---

1 Thus H U (without the visarga); पात्राणभिः पर्यंधित्वा° Ben, पात्रिणीःसंधित्वाभिक्रमः M Bc G (the last two omitting the visarga at the end).

2 Thus G (which has only both times °थाहं instead of थाह); instead of the second क्रमस्वेति Be H U have: क्रम इति, M: क्रमस्व इति।

3 Thus H only; °वपन्त्यपि G U Ben, °वपन्त्यन्त्यपि M Be.

4 वाचयम्येन M. Is वाचंयम्येन the correct reading?

5 Thus G (sec. m.), °ण्यायोद्गाता all the other MSS.

6 Om. M.

हुत्वा समिद्धारा सम्याहृत्य समिध[1] आहवनीय उपसाद-
यन्ति । परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायाꣳ
सवेशनीयाः समिधोऽभ्याधायैषा बर्हिः संनह्य पयाꣳसि
विग्रिष्याग्नीध्रं हुत्वाग्नीध्रे संवेशनरूपाणि कृत्वा प्रातःकर्मणा
प्रतिपद्यते । प्रसिद्धेन महारात्रिकेण । सिद्धमत ऊर्ध्वमुप-
स्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्यास्तके पृष्ठानीति । त्रिवृ-
त्स्तेकविꣳशस्य चक्रे आग्नेय उपस्तम्भनं । पञ्चदशस्य त्रिणवस्य
चक्रे ऐन्द्र उपस्तम्भनꣳ सप्तदशस्य[2] त्रयस्त्रिꣳशस्य[3] चक्रे सौर्य
5. उपस्तम्भनं । अथो एतद्बौधायनस्य कल्पं वेदयन्ते निर्मन्थ्यो
मन्त्रवान्भवतीत्याध्वर्यवा एवाच मन्त्रा आवर्तन्ते नाग्निमन्थ-
9. नीयाः । स्वयमृतुयाजमेवैतदहर्भवति[4] नैतदहरन्योन्यस्मर्तुयाजं
यजतीति । ॥ १३ ॥
आग्नाव्याध्वर्युरन्यस्मै ग्रहं प्रदायैतेनैव यथेतमेत्य जघनेन
हविर्धाने उपविश्यर्तुसंप्रैषमुक्त्वोपोत्थाय कृत्वा व्यवनीय प्रद-
क्षिणमावृत्य यत्राथाचीत्तत्प्राङासीनो होतृभक्षं भक्षयेत्प्रत्य-
10. ङासीनो[5] ऽध्वर्युभक्षं । पारुच्छेपीर्होता शꣳसति वालखिल्या
मैत्रावरुणो विहरति वृषाकपिं[6] ब्राह्मणाच्छꣳसी शꣳसत्येवया-

१ M G Be U ins. चाग्नीध्र ।
२ पंचदशस्य Be.
३ Thus Ben ; °त्रिंशतस्य the other MSS.
४ इति ins. U H, it is effaced in G.
५ Thus M ; प्रत्यग° the other MSS.
६ °कपीयं M.

सदतमच्छावाकः। किंकर्मा[1] तर्ह्यध्वर्युर्भवतीति[1] प्रत्याश्रुणा-
II. 252. 11. तीत्येव[2] ब्रूयाद्वा एता अध्वर्युरनुष्टुभ उद्धृत्याहरति तासां तस्रो गायत्र्यस्तासां तिस्रो ऽनुष्टुभः। सोम राजन्नेह्यवरोहेत्येतस्यै गायत्र्यै पदमात्रेण राजानमुपावहरेत्कथं तु खलु दशममहर्भवत्या[3] सर्वंचतुर्विंशं[4] च भवति[5] त्रिष्टोमं[6] चान्यत्[7] तूष्णींशंसामा-
दिति। चतुर्विंशो बहिष्पवमानः पञ्चदशं ब्रह्मसामं[8] त्रय-
स्त्रिंशमग्निष्टोमसाम। तासां तु[9] च नत्रागच्छन्ति[9]। तास्तु
विंशतिः संपद्यन्त। एतदेवापि दशममहर्भवत्या[10] सर्वचतु-
II. 256. 8. र्विंशं[11] च भवति त्रिष्टोमं चान्यत् तूष्णींशंसामादित्युपसृज-

---

१ Thus emended; किंकमतिर्श्च• Ben, किंकर्मातर्ह्य• Be G U, किंकर्मा-तर्ह्य• M, किंकर्मातर्ह्यो• H.

२ Thus G (sec. m.), •प्रत्याश्रुणातीं M Be U H, वच्चाचावोतीत्येव Ben.

३ Thus Ben and the Viv. only; •र्भवतीति or •भवति the other MSS.

४ Thus (and cp. XXVI, 16 init.) M Ben Be, सर्वचतु• G U H.

५ Om. G H Be.

६ Thus G M Be; भवतित्रिष्टद्ग्निष्टोमं U H, भवतीत्यग्निष्टोमं Ben.

७ Thus M Be (Ben defective), वा चान्यत् G U H.

८ •साम U (sec. m.) M G.

९ Doubtful and conjectural reading; तथासुचमन्यात्रयति Ben, तासा-सुचनन्यात्रयन्ती M, तासासुचनत्रयंति G U H; Ben defective. The meaning is clear; चतुर्विंशायां मध्ये (or मध्यात्) या पंचदशस्तु प्रविशन्ते। तया तयोः (i.e. the pañcadaśam brahmasāma or pañcadaśam mādhyandinam pavamānam and the trayastriṃśam agniṣṭomasāma) चतुर्विंशं भवति।

१० Thus G only (•र्भवत्या), •र्भवता all the other MSS.

११ सर्वचतु• Ben Be H.

मासे वत्सं धारयन्त्सतो धयन्निति । किंदेवत्या च खल्वेष-माहुतिर्भवतीति । प्राजापत्येत्येव ब्रूयादिति ॥ १४ ॥

॥ नवमः ॥

अथेमं द्वादशाहं यज्ञापरेव प्रतिव्यूहामस्तस्य नवाहानि प्रतिव्यूढं गच्छन्ति यान्यन्यानि प्रायणीयोदयनीयाभ्यां दश-माहाच्छो । ऽथ[1] छन्दोमास्तत्[1] षडेव[1] । स्वस्थानो[2] हि[3] प्रथमस्त्रिरात्रो[4] । गायत्रीप्रातःसवने[5] प्रथमे त्रिरात्रे[6] ऽष्टौ कृत्वो ऽग्रे प्रथममुपांश्वभिषवमभिषुणुयादेकादश कृत्वो द्वितीयं । द्वादश कृत्वस्तृतीयं । महाꣳ इन्द्रो नृवदा चर्षणिप्रा इत्येतया त्रिष्टुभा माहेन्द्रं गृह्णीयाद्दशभिः सवितः पायु-भिष्टमित्येतया जगत्या सावित्रमष्टाकपालान्प्रातःसवनीया-न्कुर्यादेकादशकपालान्माध्यंदिनीयान्द्वादशकपालाꣳस्तृतीयसव-नीयान्वसुमद्रूपेण गायत्रच्छन्दसा प्रातःसवनीयानथेन्द्ररुद्रव-द्रूपेण त्रिष्टुप्छन्दसा माध्यंदिनीयानादित्यवद्रूपेण जगती-

---

१ ? Thus Be U H ; यच्छंदोमास्ता. षडेव M, यतृच्छंदस्तत्षडेव G. यच्छंदस्तत् षडेव Ben ; the Vivaraṇa also has छंदस्तत् षडेव ।

२ स्वस्थानो Ben. स्थानो M.

३ Thus B G M, हि U हित् Ben H.

४ Thus, in accordance with the Vivaraṇa, U ; प्रथमस्त्रिरात्रो the other MSS.

५ गायत्रीं प्रा॰ G.

६ Instead of त्रिरात्रे here and in the similar passages further on some of the MSS. (Ben H U) तिरात्रे ।

च्छन्दसा तृतीयसवनीयामित्यथ जगतीप्रातःसवने[1] द्वितीये त्रिरात्रे द्वादश कृत्वो ऽग्रे प्रथममुपांशुमभिषवमभिषुणुयादष्टौ कृत्वो द्वितीयमेकादश कृत्वस्तृतीयं । महाꣳ इन्द्रो य ओजसेत्येतया गायत्र्या माहेन्द्रं ग्रहं गृह्णीयादामन्द्र सवितरित्येतया त्रिष्टुभा सावित्रं । द्वादशकपालान्प्रातःसवनीयान्कुर्यादष्टाकपालान्माध्यंदिनीयानेकादशकपालाꣳस्तृतीयसवनीयानादित्यवद्रूपेण जगतीच्छन्दसा प्रातःसवनीयाञ्श्रपयेद्वसुमद्रूपेण गायत्रच्छन्दसा माध्यंदिनीयान्रुद्रवद्रूपेण त्रिष्टुप्छन्दसा तृतीयसवनीयानित्यथ[2] त्रिष्टुप्प्रातःसवने[3] तृतीये त्रिरात्र एकादश कृत्वो ऽग्रे प्रथममुपांशुमभिषवमभिषुणुयाद्द्वादश कृत्वो द्वितीयमष्टौ कृत्वस्तृतीयं । महाꣳ इन्द्रो य ओजसेत्येतां गायत्रीं त्रिरभ्यावर्तयेदनुपयामाꣳ । सा जगती संपद्यते । तया माहेन्द्रं गृह्णीयाद्धिरण्यपाणिमूतय इत्येतया गायत्र्या सावित्रमेकादशकपालान्प्रातःसवनीयान्कुर्याद्द्वादशकपालान्माध्यंदिनीयानष्टाकपालाꣳस्तृतीयसवनीयान्रुद्रवद्रूपेण त्रिष्टुप्छन्दसा प्रातःसवनीयाञ्श्रपयेदादित्यवद्रूपेण जगतीच्छन्दसा माध्यंदिनीयान्वसुमद्रूपेण गायत्रच्छन्दसा तृतीयसवनीयानिति । ॥ १५ ॥

॥ दशमः ॥

१ Corrected ; जगतींप्रा॰ G M Be, जगत्प्रा॰ H U ; Ben has a lacuna.

२ इति om. Ben G U.

३ Thus M Be ; त्रिष्टुभःप्रा॰ Ben U H G (pr. m.), त्रिष्टुभंप्रा॰ G (sec. m.).

अथायं वैषुवतो लभेत मासगणानामित्येक आहुः सप्तदश दीक्षा द्वादशोपसदो वैषुवतं विंशमहमं। कथमु खलु गोआयुभ्याꣳ स्तोमा[1] भवन्तीति[1]। गोर्नु खलु पञ्चदशो बहिष्पवमानस्त्रिवृन्त्याज्यानि सर्वसप्तदश[2] माध्यंदिनꣳ[3] सवनꣳ सर्वैकविꣳशं तृतीयसवनꣳ सोक्थ्यमथायोस्त्रिवृद्बहिष्पवमानः[4] पञ्चदशान्याज्यानि सर्वसप्तदश[5] माध्यंदिनꣳ सवनꣳ सर्वैकविꣳशं तृतीयसवनꣳ सोक्थ्यमथेमौ विश्वजिदभिजितावग्निष्टोमौ सप्तगतौ भवतः। को[6] नु[6] खल्वेतयो स्तोमा[7] भवन्तीत्यभिजित्तु° खलु त्र्युदयस्तुरावृत्तो। ऽथ विश्वजिच्चतुरुदयस्त्यावृत्तः[8]। कथमु खल्वेकविꣳशतिगर्भा भवतीत्यभिजितमुपेत्य पृष्ठ्यꣳ षडहमुपेयुरथ चौन्यरःसामो ऽथ वैषुवतमथ चौम्प्रत्यक्सामो ऽथावृत्तं पृष्ठ्यꣳ षडहमथ विश्वजितं। कथमु खलु गोआयुषी विद्यते जानीयादिति[9]। पुरस्तादभिजितो गायुपेयात्समान एवायुर्भवतीति। कियन्तो नु खलु गवामयने

---

१ Thus Be G U and the Viv.: स्तोमा भवन्तीति H, स्तोमो भवन्तीति M.

२ Thus Be M: सर्वस° G U H Ben.

३ Thus G (sec. m.): ध्यंदिनाना all the other MSS

४ °मानं MSS.

५ Thus M Be; सर्वस° G U Ben, सर्वतःस° H

६ कोनु M H U Be G (pr. m.). कव G (sec. m.), कनु Ben.

७ Thus M Ben G; °मो भवतौ H U Be.

८ °चतुरस्त्यावृत्त: M H Be (the last two °वृत्त:). Ben defective.

९ इति Supplied by me.

ऽग्निष्टोमा भवन्तीति । ज्योतिरग्निष्टोमस्त्रिवृदग्निष्टोमो विश्व
जिदभिजितावग्निष्टोमौ वैषुवतं दशममहर्महाव्रतमिति यत्रेति
स वा इदं गवामयनं प्रज्ञातस्तोमं ब्रुवते । तस्य होत्तरं पञ्च
मासूक्तं भवति यदन्यद्गोआयुर्भ्यां च दशरात्राच्च । अनीका-
नचावृत्तान्यहान्यष्टीयात् । ॥ १६ ॥

अथेमा द्वात्रिंशतमेकादशिन्यो गवामयने । तेषां[1] पूर्व-
स्मिन्पक्षसि षोडश निष्ठीयन्ते सप्तदश[2] एकादशिन्यै चार्ध-
II. 265. 11 स्त्यो वैषुवते[3] सवनीयः संपद्यते । तस्य नवाहान्यपशुकान्य-
तिरिच्यन्त इति । कतमानि खल्विमान्यहानि भवन्तीति ।
पृष्ठ्यस्य षडहस्योत्तराणि त्रीणि त्रयश्छन्दोमा दशममहर्महा-
II. 262. 12 व्रतमुदयनीयो ऽतिरात्र इत्यभिप्लवास्त्वाचीयन्ति च तदङ्गि-
रसामयनमिति । पृष्ठ्यानामत्र स्थाने ऽभिप्लवानेव दधाति ।
पृष्ठ्यास्त्वाचीयन्ति च तदादित्यानामयनमित्यभिप्लवानामत्र
स्थाने पृष्ठ्यानेव दधात्यग्निष्टोमास्त्वाचीयन्ति च तत्प्रजापते-
रयनमित्युभयेषामत्र पृष्ठ्याभिप्लवानाꣳ स्थाने ऽग्निष्टोमानेव

१ Thus M G Be Ben U, ताषां H, cp. Āp. XXI. 23. 2.

२ Thus G (sec. m.) and the Viv.; सप्ता ins. M Ben, श्चा ins. Ben U G (pr. m.); H. defective; meaning and interpunction uncertain; cp. Āp. XXI. 23. 2.

३ Thus M U Be H Ben; °वत: H G (sec. m.), °वतैः G (pr. m.), °वतेः Ben.

दृघात्याघाटीभिः[1] पिञ्छोलाभिः[2] कर्करीकाभिरित्याघाटो[3] ऽह[3] कोलोष्ठा[4] भवन्ति । पिञ्छोला[5] च ह वीणाकाण्डमा[6] । वीणा[7] च कर्करीकास्तं[8] काल एव प्रत्याहरन्तीत्याहन्यादित्येवेदमुक्तं[9] भवति । ॥ १७ ॥ एकादशः ॥

अथ वै भवति ब्रह्मवादिनो वदन्ति स त्वै यजेत यो ऽग्निष्टोमेन यजमानो ऽथ सर्वस्तोमेन यजेतेति । चत्वारि पञ्चदशान्याज्यानि । तौ द्वौ त्रिꣳशद्वर्गौ । तयोरितरस्मिꣳ-स्त्रिꣳशद्वर्गे तिस्र उपास्यति । तौ द्वौ त्रिणवत्रयस्त्रिꣳशौ ।
16. गायत्रं पूर्वं ऽहन्साम भवति त्रैष्टुभमुत्तर इति होतुराज्य-

१ Thus G M U, ॰टिभिः Be H.

२ Thus (पिंछा॰) H U G (sec. m.), पिच्छो॰ G (pr. m.) Be M, पिच्छो॰ Ben.

३ कर्करी॰ Ben, कर्करि॰ the other MSS.—॰घाघोटह Ben H U, ॰घोटह Ben, ॰घाटघोटह M, ॰घाघउह G.

४ ? कोलोष्ठो H, कोलोष्ठा G, कोलोष्ठो M U, कालोष्टौ Ben, कोलोष्ठो Be (compound of काल-ओष्ठ ?).

५ Thus M H U, पिच्छोला Be G, पिञ्छोला Ben.

६ ?? Thus read U H Be (with var. ॰ध्वमा), वीणाकाणकाण्डमा M, वीणाकाण्डमा G.

७ Thus G only; वीणावा Be H U M, वीणार्का Ben.

८ MSS., exc. Ben, कर्करिका॰ ; perhaps the form with short *i* is, after all, preferable.

९ Emended in accordance with the text proper; instead of ॰दमुक्तो॰ the MSS. read दसंतो॰ ।

II. 270. 6. त्रेताग्नि[1] संपादयेदेवमेवोत्तरे ऽह्नि होतुरेवाज्ये । अथाप्येषा[2] सहस्रतम्यन्यतएनी कण्डूकृतोपक्लृप्ता[3] भवतीति । सꣳस्थेविते-त्येवेदमुक्तं भवति । कस्मिंस्तु खलु काले लक्ष्मणां पष्ठौहीं
II. 273. 7. वार्त्रघ्नीं दद्यादिति । संग्रामं जित्वा राजन्य एनां[4] दद्यात्कथमु खलु गर्गत्रिरात्रेणर्तुमुखेषु विहृतेन यजेतेत्याषाढे वा[5] श्रावणे वा पक्षे ऽग्निष्टोमेन वा[6] यजेत । तत्पत्नीसंयाजान्तं वा हृदय-शूलान्तं वाहः कृत्वा समुपनह्य राजानं काले वसतीवरीरभि-ग्टह्याहीनसंततिं[7] कृत्वा पावोवायव्यꣳ संप्रचाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं द्रुत्वा . समिद्धारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति । परिहृतासु वसतीवरी-ष्वाहुतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः समिधो ऽभ्याधाये-त्याबर्हिः संनह्याविग्निध्य[8] पयाꣳस्युपवसत्यथ श्वो भूते सव-नेष्टा यजेत । तत[9] सामयजुर्हरति । स एवमेवाहरहर्वसती-

---

१ Thus G U H, होतुराज्यानि Be, होतुराज्यानि हलानि M, होतुराग्नि-नानि Ben.

२ षा॰ M.

३ Thus Ben M U, कंडकृतो॰ Be, ॰कंडूकृतो॰ G H.

४ एतां Be.

५ Om. all exc. Ben.

६ Is वा to be cancelled ?

७ ॰वरीभिः परिग्टह्या Ben H.

८ Thus G Be U H ; ॰त्रविमि॰ the other MSS.

९ तत om. M. Ben ; are we to remove it or to read as infra (k. 19). तत्र च ?

वरीः परिहरमाणश्चतुरो मासः सवनेष्ट्या यजते । नाग्निहोत्रं जुहोति न दर्शपूर्णमासाभ्यां यजते । ऽथ चतुर्षु मासेषु पर्यवेतेषु परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायामहरहः संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्य पयाꣳसि विम्रिश्योपवसन्ति । ॥ १८ ॥

अथ श्वो भूत उक्थ्येन यजते । तत्तथैव पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य राजानं काले वसतीवरीरभिगृह्याग्नीन्संततिं[1] कृत्वा ग्रावोवाचयꣳ संप्रणाय्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं हुत्वा समिद्वारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति । परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्याविम्रिश्य[2] पयाꣳस्युपवसन्त्यथ[2] श्वो भूते सवनेष्ट्या यजते । तत्र तथैव न[3] स्तम्बयजुर्हरति । स एवमेवाहरहर्वसतीवरीः परिहरमाणो ऽपराꣳश्चतुरो मासः[4] सवनेष्ट्या[4] यजते । नैवाग्निहोत्रं जुहोति न दर्शपूर्णमासाभ्यां यजते । ऽथ चतुर्षु मासेषु पर्यवेतेषु परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायामहरहः संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्य पयाꣳसि विम्रिश्योपवसन्त्यथ श्वो भूते

१ ०वरीभि. परिह्व० G U.

२ Thus M U G; संनह्य पयांसि विम्रिश्योप० the other MSS.

३ न read by all the MSS., but seems to be expunged in M.

४ Thus M U H; चात्वाल० Ben G, मासाच० Ben.

II. 273. 1 sqq. ऽतिरात्रेण यजते संयज्ञपुच्छेनार्थिताꣳ सहस्रतमीं प्राचीं
वोदीचीं वावर्तयꣳस्तया[१] विहारं चात्मानं च न व्यवेयादिति ।
॥ १९ ॥ द्वादशः ॥

किंदक्षिणा उ खल्वहीना भवन्तीत्यहर्गणोऽहर्गणः सहस्र-
दक्षिणः स्यादित्येतदेकमेकैकमहः सहस्रदक्षिणꣳ स्यादित्येत-
देकं । द्वादशशतदक्षिणꣳ स्यादित्येतदेकं । यथाश्रद्धदक्षिणꣳ
स्यादित्येतदपरमादेशादेवैतस्मिन्नतिरात्रे सहस्रमनुविहितं
ददाति । द्विरात्रप्रभृतयो ऽहीना भवन्त्येकादशरात्राद्येमा-
न्यहीनाभिपरीतानि[२] सत्राणि भवन्ति यथैतत्संवत्सरगर्भे[३]
एकादशरात्र । उभयविधो हि भरतद्वादशाहो । द्वादशाग्नि-
III. 168. 10. ष्टोमा रथंतरसामानः । स ह भरतद्वादशाहो । ऽथोद्यत्स्तोमेषु
त्रिवृत्प्रथममहः स्यात्पञ्चदशं द्वितीयꣳ सप्तदशं तृतीयमेकविꣳशं
चतुर्थमितीव्वेकमथापरस्त्रिवृत्प्रथमस्याह्नः[४] प्रातःसवनं पञ्चदशं
माध्यंदिनꣳ सवनꣳ सप्तदशं तृतीयसवनमथ[५] द्वितीयस्याह्नः

१ Thus M; वावर्तयन्स्तया G, वावर्तयस्तया U Ben H.

२ Thus G; °हीनाभिः पेरी (or रि · तानि the other MSS.; चहीना-पमितानि or चहीनापरिमानि the Vivaraṇa; cp infra k. 21 s. fin.

३ Thus Ben; यथैतत्° the other MSS.

४ °मितीव्ये° or मितीवे° MSS.; the following is doubtful; °कमथा-परंवचिह G U Ben U M, but in M व is effaced: °क''थापरं सर्वचिद° Ben. The Viv. has °थपरस्त्रिवृ°; if this is the correct reading, we ought to correct also एकम् into एको ।

५ The MSS. here are defective; the passage has been restored by me according to Sāyaṇa on TS. VII. 1. 8 (ed. Calc. Vol. VII, 198).

पञ्चदशं प्रातःसवनꣳ सप्तदशं माध्यंदिनꣳ सवनमेकविꣳशं तृतीयसवनमथ तृतीयस्याह्नः सप्तदशं प्रातःसवनमेकविꣳशं माध्यंदिनꣳ सवनं त्रिणवं तृतीयसवनमथ चतुर्थस्याह्न एकविꣳशं प्रातःसवनं त्रिणवं माध्यंदिनꣳ सवनं त्रयस्त्रिꣳशं तृतीयसवनम् ॥ २० ॥

अथेम औपसदाः पुरोडाशाः शूर्पादानप्रभृतय आम्नाताः । स्रुवाहुत्या चैनान्सह संस्कुर्यादौपमन्यवीयेन[1] कल्पेनाग्नेयानेककपालाननुसरस्वति[2] प्राञ्चो यान्तीत्याहवनीयसकाशात्प्रक्रम्यां प्राच्येत्तां यत्र निपतेत्तद्गार्हपत्यस्यायतनꣳ स्यात्प्राचीनं[3] तत आहवनीयो ऽथ यद्यपर्याणा अप उपाधिगच्छेयुरपोनप्त्रीयं चरुं तृतीयसवनीयानामनुनिर्वाप्यं कुर्युर्योपोत्तरेयुः समाप्यत्वेव[4] शम्यां प्राच्येत्यश्वा भवन्ति पश्चाद्वा भवन्तीत्यभिप्लवानामेवैते[5] ऽपच्छेदा[5] भवन्त्यहमे ऽन्ते वाजपेय इति[6] । तत्र यदेव सुत्याभिपरीतं वाजपेयिकं कर्म

1 Thus Ben, ०न्यवेन the other MSS.

2 Thus G (sec. m.) only; ०नुसरस्वती all the other MSS. and my two copies of the Vivaraṇa.

3 कुर्वन्ति instead of स्यात् G (sec. m.).

4 ? Thus M G; ०त्मेव U H; समाप्येत Ben, स्वसमाप्यत्वमेव Be; the Viv. gives the periphr.: उत्तीर्य समारे(दे)त् ।

5 Uncertain; ०वैतेपच्छेदा Be, ०वैतेपच्छेदा H, वैवे-च्छेदा Ben, ०वैवेपच्छेदा U and G (pr. m.), ०वैवेतपच्छेदा G (sec. m.), ०वैतपच्छेदा M. The Vivaraṇa periphrases: अभिप्लवानामेवान्ते लोपे (or ०वान्तलोपे) न चान्ये ।

6 इति Supplied by me.

II. 279. 14. तत्कुर्याद्यद्येवं षट्सदामयनमच्छन्दोमं[1] भवतीति । विज्ञा-
यत[2] उ खल्वस्य छन्दोमभक्तयश्चतुर्विंशं चतुश्चत्वारिंश-
मष्टाचतुर्विंशमिति । ॥ २१ ॥ त्रयोदशः ॥

II. 283. 1. अथायमतिरात्र उभयविधो भवत्यहीनो वैकाहो वापि
तु खल्वस्याहीनस्यैव रूपं । द्वादशोपसदो ऽनेकमहरभि-
विधत्ते[3] । ऽथैकाहस्यैव रूपं । सहवसतीवरीर्गृह्णाति सह-
II. 285. 13. त्यग्रमुपाकरोत्येकं[4] क्रतुकरणं । समयाविषिते सूर्ये हिर-
ण्येन षोडशिनं सोममुपाकरोतीत्यर्धास्तमित इत्येवेदमुक्तं[5]
भवति । तस्य यदनुपाकृत आदित्यो ऽभ्यस्तमियाद्गार्हपत्ये तिस्रः
स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथ यद्युक्थ्ये ऽतिरिच्येतापि-
रात्रं कुर्वीतेत्यतिक्रान्ताः खल्वस्य द्वीचोपसदो ऽतिक्रान्तं क्रतु-
करणमतिक्रान्तं षोडशिनो ग्रहणमथ तदानीमेव षोडशि-
पात्रमुपकल्प्य तिसृभिर्ऋग्भिर्गृह्णीयादथैतेन[6] पुरस्ताद्रात्रि-
पर्यायेभ्यश्चरेत्तत्रैवमेव संप्रैषः[7] प्रतिप्रस्थातराग्रयणाद्गृहतीयं ग्रह-

---

१ Thus (and cp. TS. VII. 4. 2. 3, Pañc. br. XXIII. 19. 8) M G U H; ०यनचंदोमं Be, ०यनंमचंदोमं Ben.

२ r. विज्ञायन्त ?

३ Thus G (sec. m.), नेकम० Be, नैकम० M Ben G (pr. m.) U (sec m.), चेकम० H.—Instead of अभिविधत्ते (thus M Be G U), Ben: अभि विधत्ते, H. अभिधत्ते। The Viv.: अहीनरूपकं द्वादशोपसत्त्वमनेकाहविधत्वम् समाप्तत्वं च।

४ Thus M G U Be; ०त्यकं Ben, त्येवं H.

५ इति om. all exc. M.

६ Thus M Ben; ०चैतेन G Be U.

७ प्रप्र M G U.

ह्रौयाणि[1] आग्नीः पृषदाज्यं गोपायाग्नीदाग्निनं ते द्विक-
90. 11. पालꣳ हुतमप्यपररात्रे ऽस्त्विति । कस्मिन्नु खलु काल आग्निनो
द्विकपालो निरुप्यत इति । तार्तीयसवनिकैर्वा पुरोडाशैः[2]
सहापि वा पुरस्तादुत्तमस्य रात्रिपर्यायस्य । त्रिवृद्वै स्तोमाना-
09. 11. मवमस्त्रिवृत्परम इत्यतिरात्रब्राह्मणमेवैतद्भवत्यथैषꣳ सौत्रा-
मणिकी सुरा पादकिण्वा[3] वा[4] भवत्यपि वा पश्चिका ।
शष्पाणि च तोक्माणि[5] चेति । यवानान्तु[6] ह[6] शष्पाणि
309. 15. भवन्ति व्रीहीणान्तु ह तोक्माणि[5] माषास्तु नग्नहुरं चायं कारो-
तरो दारुमयो वा वैदलो[7] वा मृन्मयो वा चर्मणा त्वेवाभि-
विदि[8] स्यादथꣳ सुतासुतीति । सुतमु[9] हास्यामुत्र भवत्या-
331. 7. सुतमु[10] हास्येह भवत्यथास्मिन्द्राग्नायणपात्रे कुर्यादुपाꣳशुयाज-
मिति । ॥ २२ ॥ चतुर्दशः ॥

१ Om. G U H Be.

२ पञ्चपुरो॰ H, पौरोडाशैः M.

३ पादकौत्वा H.U, पाकौत्वा G, पादचित्वा M, पादचित्वा Be. The Viv., although corrupt, mentions the word किण्वा ।

४ वा om. H Ben.

५ ॰ष्पि both times G Be, once ॰ष्पि once ॰ष्मि M, ॰ष्मि both times Ben H U.

६ यवानांच Ben; read perhaps यवानामेव ।

७ वैदलो M H U Ben, वै॰ G Be.

८ Thus all exc. Ben (॰विदि). The Viv. seems to give the paraphrase: कर्मणा (r. च॰) चर्मोत्थः (var. चर्मोत्थः) ।

९ r. सुतमत्राज्ञा॰ ?

१० ॰भवत्यसुतमु Ben, भवत्यासुतमो M Be H.

II. 292. 1. अथास्यामेकादशिन्यां यूपाहुतिस्तन्त्रं याग्नौ हूयते । ऽथा-
ग्रश्नजा संचारिणी । सꣳस्पर्शकं[1] कर्म तद्भवत्यग्निष्ठां[2] प्रथम-
स्याश्रिꣳ[2] सकृदाहन्याद्द्विर्द्वितीयस्य त्रिस्तृतीयस्यैवमेवेतरेषामनु-
पूर्वं छेदनमाद्याय चाथ वेदिविमानं । दशानां च रथाक्षाणा-
मेकादशानां च पदानामष्टाङ्गुलस्य च[3] चतुर्विꣳशं भागमाद- ५
II. 293. 9. दीत । स प्रक्रमः स्यात्तेन वेदिं विमिमीताथेमावुपस्थावानौ
चतुरङ्गुलमात्रेण विकृष्टतमौ[4] स्यातामथेतरे रथाक्षान्तराला[5]
II. 293. 10. एव स्युरित्यथ वै भवत्युपरसंमितां मिनुयात्पितृलोककाम-
II. 293. 12. स्येति यावत्यग्निष्ठस्योपरं[6] तावन्मात्रा इतरे भवन्ति । चषाल-
संमितामिन्द्रियकामस्येति यावदग्निष्ठस्य रशना तावन्मात्रा १०
II. 293. 13. इतरे भवन्ति । सर्वान्समान्प्रतिष्ठाकामस्येति सर्वान्समान्प्रतिष्ठा-
II. 293. 14. कामस्य करोति । ये त्रयो मध्यमास्तान्समान्पशुकामस्येति
II. 294. 1. तान्समान्पशुकामस्य करोति । व्यतिषजेदितरानिति[7] स एवमेव
II. 294. 3. दक्षिणमुत्तरमित्यष्टौ यूपान्व्यतिषजत्यथ वै भवति यं कामयेत
प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्धं वर्षिष्ठमथ ११

१ सꣳस्पृष्टक Be. Instead of सꣳस्पर्शकं कर्म a citation in the Mahāgni-sarvasva gives संस्पर्शि कर्म ।

२ Thus according to Ms. (text and comm.); °ग्निष्ठांशस्याश्रिꣳ the MSS.

३ Om. Ben Be U; cp. XXX. 4.

४ विप्रकृ° M Ben.

५ °चानचाद्दा M Be, चांनचाद्दा H.

६ Thus MSS.; r. यावदग्नि°?

७ M Ben ins. व्यतिषजति ।

द्रढीयांसमित्युत्तरार्ध्यमथ वर्षिष्ठं मिनोति दक्षिणार्ध्यं द्रढीयांसमेष वै गर्तमितस्यैवं मिनोति ताजक् प्रमीयत इति
294. 6. ब्राह्मणं । दक्षिणार्ध्यं वर्षिष्ठं मिनुयात्सुवर्गकामस्याथ द्रढीयांसमिति ॥ २३ ॥

अङ्गुष्ठपर्वमात्रेणाङ्गुष्ठपर्वमात्रेणोत्तरमुत्तरं यूपं द्रढीयांसं मिनुयादपि वा यूपावटानामेवैता मात्रा अतिखनेदपि वोपघ्नमेवोपनिदधते[1] । ताभिर्मात्राभिरभिसंपादयेत्कथमु खलु यूपावटांश्च परिलिखतो यूपांश्चोच्छ्रयतः[2] पशूंश्चोपाकुर्वतः संचरौ[3] स्यादित्यन्तरेणाग्निष्ठं[4] चोपस्थावानं चोपातीत्य जघनेनोत्तरवेदिं परिक्रम्यान्तरेणाग्निष्ठं[5] चैवोपस्थावानं[6] चोपातीत्यैकैकं परिलिखेदोच्छ्रयेदोपाकुर्याद्वापि वा यंयं परिलिखेदोच्छ्रयेदोपाकुर्याद्वा तंतं न व्यवेयाद्दक्षिणेन दक्षिणमुत्तरेणोत्तरमपि वा सर्वानेवाग्रेण यूपान्परीत्यैकैकं परिलिखेदोच्छ्रयेदोपाकुर्याद्वा । व्यतिषक्तं[7] तेन पूर्वाः संपद्यन्त । एवं

१ ॰निधत्ते U.

२ ॰च्छ्रयतां M, ॰च्छ्रयतो Ben U.

३ Corrected; कःसचरौ M G Be H, कःसंचारौ Ben, कंसंचरौ U. The Mahāgnisarvasva संचरः (without कः). संचरौ (cp. also XXV. 20 : 251. 4) has the meaning of मार्गः (Viv.).

४ ॰ष्ठां most of the MSS.

५ Thus M and a citation in the Ms.; ॰ग्निं the other MSS.

६ एव given by Ben only.

७ ॰षंक्ते Ben, ॰षक्त Ben, ॰षंक्तं H.

व्यतिषक्तानामेवैतेषां पशूनां[1] पश्च दक्षिणार्धान्पशूनुपकल्प्यैव[2]
स्नापयेयुर्ब्राह्मणं प्रथममत्यानयेयुरथानुपूर्वमितरानन्तरेण चा-
त्वालोत्करावुदङ्ङुपनिष्क्रम्य[3] प्रस्नात्वा[4] निहन्युरपि वा मण्डली-
कृतांस्तेषां वपा उत्खिद्याहरेयुर्यथा[5] वपाभिर्विहारं चात्मानं
II. 296. 3. च न व्यवेयुरथायं पात्नीवतो ऽङ्गुष्ठपर्वमात्रेणोत्तरार्धाद्यूपाद्ग्री-
पाश्चादपि वा यथाब्राह्मणमवाङ्नाभिमत्रपाशमनवस्तीर्ण-
II. 297. 15. मं।थेदꣳ[6] सर्पाणामयनꣳ स्तोमतो विहृतं भवत्यथेदं विश्व-
II. 298. 11. सृजामयनं कथमिदानीन्तनेषु स्यादिति । शतं दीक्षाः शत-
मुपसदः सहस्रं[7] प्रसुतः[7] । ॥ २४ ॥ पञ्चदशः ॥
II. 299. 10. अथेदं कुण्डपायिनामयनमग्निहोत्रपूर्वमेके ब्रुवते सोमपूर्व-
मुपयन्ति[8] । तत्पत्नीसंयाजान्तं वा हृदशूलान्तं वाहः कृत्वा

१ Om. Ben Be.

२ पशून् ins. all the MSS. exc. Ben (cp. XVII. 14 : 295. 10).

३ °ष्क्रम्य G U.

४ Thus Ben only and Ms. (प्रस्नानुक्रमावस्थितान्), and the Vivaraṇa (प्रस्नाप्यवा स्थितानि (sic) यूपः); प्रतिप्रस्नाता U (pr. m.), प्रति-प्रस्नातारा the other MSS.

५ Thus the Ms. (तेषां संज्ञप्तानां वपाः अध्वर्युर्वा उत्खिद्य परिकर्मिण चात्वालाग्रं प्रति नयेयुः); उत्खिदेयुर्यथा the MSS.

६ चानवच्छिन्नम् instead of चानवस्तीर्णम् G (sec. m.).

७ These words are missing in G Be U H; प्रसुतः M, प्रसुतं Ben.

८ Uncertain reading; °मुपयंति G (sec. m.) Ben; °मूपयं U H, °मुभयं M, °मुपैवयं Be; the Viv.: स एव चात्वालोत्करमध्यः।

समुपनह्य राजानं काले वसतीवरीरभिगृह्याच्छिन्नसंततिं[1] कृत्वा ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं हुत्वा समिद्धारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति। परिहृतासु वसतीवरीष्वाकृतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः समिधो ऽभ्याधायैवाबर्हिः संनह्याविभ्रिष्य पयाꣳस्युपवसन्त्यथ श्वो भूत आमावास्येन हविषा यजते। तत्र न साम्नयजुर्हरति। त एवमेवाहरहर्वसतीवरीः परिहरमाणा अष्टाविꣳशतिमहान्यामावास्येन[2] हविषा यजन्ते। नाग्निहोत्राणि जुह्वति न पौर्णमासीं यजन्ते। स यत्र तृतीयसवने धिष्णियान्विहरति तदन्तं मार्जालीयं करोति। समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्नि कृत्वा तैर्मार्जालीये प्रचरति। गार्हपत्य एव पिण्डपितृयज्ञꣳ श्रपयित्वा तेन मार्जालीय एव प्रचरति। प्रतिपूरुषमुवेवैषां[3] प्रवरान्प्रवृणीत। एकैकस्यैवैषां चयस्त्रयः पिण्डास्ते पञ्चदश[4]। महापितृयज्ञे स्तीर्णं[5] बर्हिर्भवति न वेदिमाश्रिवति[6] न साम्नयजुर्हरति नाध्यानि गृह्णीते। स यत्र

१ Emended (cp. XXVI. 18, 19); •वरीभिः परिस्रुत्या• U H, वरीरभि-परिस्रुत्या• M G Ben, •वरीभिपरिस्रुत्या• Be.

२ Emended; •विंशतिरहा• MSS.

३ Thus M G U H and the Viv.; •पुरुष• Ben Be.—•मुवेवैषां my conjecture (उवेव = उ इव), •मुवैवैषां MSS. exc. G (•मुवेवैषां)।

४ पंचदशा M Ben Be.

५ स्तीर्णे M Be H.

६ After श्रिवति Ben ins. न चयति।

तृतीयसवने धिष्णियान्विहरति तद्वच्चं मार्जालीयं करोति । समासन्नेषु हविःषु गार्हपत्ये महापितृयज्ञहवींष्यपि श्रपयित्वा तैर्मार्जालीये प्रचरेदाहवनीये मावत्या प्रचरेदन्तमेवावभृथः[1] परीचाद्विहृतीया[2] वेदिर्भवति प्रक्रमाणास्तु च तृतीयं नवमस्तु[3] भूमेर्भागो भवतीति । ॥ २५ ॥ षोडशः ॥

II. 302. 12. अथ पञ्चहविषमिष्टिमिष्ट्वान्वहं पुनरावृत्तमेकैकेन हविषा
यजेतैकं द्वे वा हविषी पर्यवेते स्यातामथ संवत्सरः समा-
प्येत कथं तत्र कुर्यादिति । प्रतिकृष्यैतस्य पञ्चस्य पञ्चहविष-
II. 302. 16. मिष्टिं निर्वपेदथ संवत्सरतमे ऽह्नि पञ्चहविः स्यादिति । प्रथमे
द्वादशाहे ऽग्निं चिन्वीतेति । प्रथमे द्वादशाहे ऽग्निं चिन्वान-
श्चतुरहं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमयाष्टाहोनः संव-
त्सरमुत्तमयाथेतरांश्चतुरहोनांश्चतुरहोनानेकैकया[4] चतुर-
श्चतुरो[5] मासान्प्रत्याददीत । चतुरहं प्रथमयोपसदा गच्छे-
च्चतुरहं मध्यमया चतुरहमुत्तमयापि वा चतुरश्चतुर एव
मासानेकैकयोपसदा गच्छेदित्युत्तमे[6] द्वादशाहे ऽग्निं चिन्वी-
तेत्युत्तमे द्वादशाहे ऽग्निं चिन्वानो ऽष्टाहोनः संवत्सरं प्रथम-

---

१ Thus M (sec. m.) G; °रेदन्तमवावभृथः Be; °रेदन्तमेवावभृथः U H, °रेदन्त एवावभृथः Ben; cp. the Vivaraṇa: अवभृथोऽन्ते भवेत् ।

२ Thus (परीचात्) M Ben; प्रतीचात् the other MSS.

३ नवमंश Ben.

४ Instead of इतरान् (thus Ben M the Viv.) इमान् H Be G U.

५ Thus G U M H Be; चतुरश्चतुरहोनान् Ben.

६ इति om. G.

योपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयाथेतरांश्चतुरहोनानेकैकया[1] चतुरश्चतुरहोनान्मासान्प्रत्याददीत[2] । चतुरहं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयापि वा चतुरश्चतुर[3] एव मासानेकैकयोपसदा गच्छेदिति । ॥ २६ ॥

ṡ93. 6. अथ लोकंपृणा इष्टका उपदधन्मासमेतीति । लोकंपृणा इष्टका उपदधन्मासं गत्वा चिङ्ग्रमत्तमस्यामसः[4] सर्वं प्रच्छाद्य इष्टका प्रच्छादयेदपि वा चिङ्ग्रतोऽवकाशं हत्वा लोकंपृणा इष्टका उपदधन्मासमेतीति । कथमेतं मासं गच्छेदितीष्टिः प्रथमाय पूर्वाह्णिके प्रवर्ग्योपसदावथेष्टका[5] अथापराह्णिके[5] प्रवर्ग्योपसदौ मासि वसोर्धारेति । मासं पुरीषेण यन्तीति । कथमेतं मासं गच्छेदितीष्टिः प्रथमाय[6] पूर्वाह्णिके प्रवर्ग्योपसदावथ पुरीषमथापराह्णिके प्रवर्ग्योपसदौ । चतुरो मास उपसद्भिरे-

---

१ Instead of इतरान् some of the MSS. again इतरान्;—चतुरहोनान् twice (as above) H, and one of my copies of the Vivaraṇa.

२ ? Thus (and is so to be read also supra, 308. 12 ?) M, U G, चतुरश्चतुरहोनान्मासान्प्र॰ K, चतुरश्चतुरहोनान्मासान्प्र॰ Ben, चतुरश्चतुरहोनान्मा-मासान्प्र॰ Be.

३ Thus Ben H and one copy of the Viv.; चतुर the other MSS.

४ Are these words corrupt? The Vivaraṇa periphrases: चितमग्ने ऽग्नि सर्वमुपधेय लोकमुपदध्यात् ।

५ Thus according to the Viv.; ॰चेष्टकामथाप॰ G, U Ben; the other MSS. are incomplete.

६ अथ om. the MSS; it is given in the Vivaraṇa.

तीति[१] । यदमुत्र[२] मासेन करोति तदिह दशरात्रेण करोति । चतुरो मासः सुनोतीति । कतमे नु खल्विमे मासा भवन्तीति । गवामयनस्य प्रथमोत्तमौ च मासौ यौ चाभितो
II. 306. 1. विषुवतः[३] सह वैषुवतेन । वसतीवरीषु मृत्पिण्डमन्ववधायेति[४] । किमर्थो नु खल्वयं मृत्पिण्डो भवतीति । संतत्यर्थ एष भवतीति । भिन्ने कुम्भे ऽन्यस्मिन्कुम्भ एतं मृत्पिण्डमन्ववधाय[५] आनयेत्तत्पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपहूय राजानं काले वसतीवरीरभिगृह्याहीनसंततिं[६] कृत्वा ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं हुत्वा समिद्धारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति । परिहृतासु वसतीवरीष्वाहुतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्याविविच्य[७] पयाꣳस्युपवसन्त्यथ श्वो भूते सवनेष्वा यजन्ते । तत्र न स्तम्बयजुर्हरति[८] । त एवमेवाहरहर्वसतीवरीः परिहरमाणाः संवत्सरꣳ सवनेष्वा यजन्ते । नाग्निहोत्राणि जुह्वति न दर्शपूर्णमासाभ्यां यजन्ते ।

---

१ Thus Ben and the Viv.; उपसद् उपसद्भिरेतीति the other MSS.

२ Thus the Viv; यदत्र the MSS.

३ वैषुवतोः Ben.

४ Thus Be U G H M; °पिंडमवधाय Ben.

५ Thus Ben; the other MSS. om. अनु; Be defective.

६ Thus Be G U H; °वरीरभिपरिगृह्या° M (sec. m.).

७ Thus M G U Be; संनह्यविविच्य Ben H.

८ °र्वरति MSS.

ऽथ संवत्सरतम्यां[1] पर्यवेतायां परिसृतासु वसतीवरीष्वाहृतायाँ सुब्रह्मण्यायामश्वरथः संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्य पयाँसि विमथ्योपवसन्त्यथ श्वो भूते[2] ऽभिजितेष्ट्वोत्तिष्ठन्ति[2] । ॥ २७ ॥ सप्तदशः ॥

306. 8. अथ वै भवति छन्दस्वितं चिन्वीत पशुकाम इत्यभ्यादानप्रभृतीन्मन्त्रान्साधयेदा[3] वायव्यात्सं प्रत्यक्षं वायव्येन पशुना यजेत प्रत्यक्षं दीक्षणीययोत्साप्रवृञ्जनप्रभृतीन्मन्त्रान्साधयेदा वात्सप्रविष्णुक्रमेभ्यः । प्रत्यक्षं वात्सप्रविष्णुक्रमैः क्रमित्वा निगदेद्वेतरान्मन्त्रान्विहरेदग्निँ[4] । रूपाणि[4] दर्शयेद्रूक्षेदिरिणं । तत्र नैर्ऋतान्मन्त्रान्निगदेत्स[5] प्रत्यक्षं गार्हपत्यमुपतिष्ठेत । प्रत्यक्षं प्रायणीयया । प्रत्यक्षमातिथ्यया । कार्ष्णाजिनीप्रभृतीन्मन्त्रान्साधयेदा[6] कर्षणावपनाभ्यां । प्रत्यक्षं कर्षणावपने । प्रथमां

---

१ Thus emended; ०वत्सरतस्यां Be U H, ०वत्सरतस्या G Ben.

२ Thus Ben and G (sec. m.); भूतेश्चत्तिष्ठंति U, भूतेयोत्तिष्ठंति H Be, भूते इष्टोत्तिष्ठंति M.

३ Corrected; इत्यभ्यादान० Ben, इत्यारभ्यादान० the other MSS.; The Vivaraṇa details हैतस्य संत्वादिनाभ्यादान० (sic), cp. X. 2 : 2. 3.

४ Doubtful; G (sec. m.) reads as given in our text and cp. the Vivaraṇa विहरेत् चिनुयादग्निम्; विहरेदग्निंतचरूपाणि Ben, विहरेदग्निंरूपाणि Be, विहरेदग्नोडूपाणि H U, विहरेदग्नौरूपाणि M; the comm. on the Śulba cites the passage with अग्निरूपाणि ।

५ Emended; नैर्ऋतीमंत्रा० M Be G (sec. m.); नैर्ऋतिमंत्रा Ben U, नैर्ऋतिमंत्रा० H.

६ Thus (कार्ष्णाजिनी०) M Be H U (cp. X. 23 : 21. 17); ०जिनि० G (sec. m.) ०जिन० Ben.

चितिꣳ सपुरीषां॰ निगदेदेवं द्वितीयामेवं तृतीयाꣳ । सर्वां[१] चितिꣳ सपुरीषाꣳ सवर्णां चितिꣳ सपुरीषां[१] निगदेद्या[२] अथान्तःपात्रीका[२] आकृतयः स्युर्जुहुयादेव ता । अथ य औत्तरवेदिका मन्त्राः स्युर्निगदेदेव तान् । ॥ २८ ॥

अग्निहोत्रं वै दशहोतुर्निदानं दर्शपूर्णमासौ चतुर्होतुरित्येक आनुपूर्व्यं[३] ब्रुवते । ऽथाप्युदाहरन्त्याग्न्याधेयं पूर्वस्यां ततावेकादशप्रयाजꣳ सर्वꣳ सहोत्पन्नमृतवः पञ्चोतेति । चातुर्मास्य[४] एष पशुबन्ध उक्तो भवत्यथाप्युदाहरन्ति षट्सुषट्सु मासेष्वाहिताग्निना पशुना यष्टव्यं भवत्युभे काष्ठे अभियजेत । माघमासे[५] धनिष्ठाभिरुत्तरेणेति भानुमानर्धाश्लेषस्य श्रावणस्य दक्षिणेनोपनिवर्तत इत्येते काष्ठे भवतस्तदन्ततो ऽग्नीजानस्य[६]

---

१ The reading of this passage is wholly uncertain; I have accepted the reading of M (on सवर्ण cp. XVII. 25 and 26); सर्वांचितिः सपिंडां चितिं सपुरीषां U H; सर्वांचितीः सपिंडां चितिं सपुरीषां G, सर्वांचितीः संपिंडां - - - चितेसपुरीषां Be, सर्वांचितीः संवर्णा - - चितिं,सपुरीषां Ben.

२ Thus G (sec. m.), which however, as do all the other MSS. exc. U, reads ॰वांतःपा॰ instead of॰वान्तःपा॰; निगदेदेवंवांतः पात्रिका G (pr. m), निगदेदेवंचावावांताः पात्रीका M., निगदेदेवावांताः पात्रिका H, निगदेदेवंवावांतः पात्रिका U, निगदेदेवंवां - - - वांताः पात्रीका Be, निगदेदेवंवाभांताः पात्रीका Ben.

३ Thus M Ben U G (sec. m), ॰पूर्वं Be, चानुपूर्वं H G (pr. m.).

४ Thus Be U G and the Viv. (one copy); पञ्चास्य M H Ben and the Viv. (another copy).

५ ॰मासेन Ben U (sec. m.).

६ Are we to read with the Vivaraṇa, ऽग्नीजानꣳ ?

334. 6. संवत्सरो नानीयादथ चातुर्मास्येषु सोमेषु पञ्चहोता सप्तहोतु
स्थानं प्रत्येत्यथ य एष चातुर्मास्यसंयोजनो निर्मन्थ्य उत्सीद-
त्येष पशुसंयोजन एव[1] भवति परिधौ पशून्नियुञ्जीतेति[2]
340. 17. ब्राह्मणमेतद्यूपा एव तदस्माकं भवन्त्यथ[3] महापितृयज्ञे स्तीर्णं
बर्हिर्भवति न वेदिमालिखति न स्तम्बयजुर्हरति नाज्यानि
गृह्णीते स यत्र तृतीयसवने धिष्णियान्विहरति तदजस्रं
मार्जालीयं करोति महाहविर्भिश्चरित्वा समाप्तेषु हविःषु
गार्हपत्ये महापितृयज्ञहवींषि श्रपयित्वा तैर्मार्जालीये प्रच-
रेदाहवनीये माहृत्या प्रचरेदन्तमेवावभृथः[4] परीयात्तस्य प्रथमा
चितिः पुरीषवती[5] मन्त्रवती भवतीति प्रथमैवास्य चितिः
पुरीषवती मन्त्रवती भवत्यथेतरास्तूष्णीका यां चितिं
सपुरीषां कुरुते सैवास्य चितिः पुरीषवती मन्त्रवती भव-
त्यथेतरास्तूष्णीकाः ॥ २९ ॥ अष्टादशः ॥

343. 1, अथेम एकाहास्तेषां यान्यहान्यनादिष्टान्यग्निष्टोमा इत्येव
344. तानि जानीयादथाहीनरात्रिसत्रेषु यान्यहान्यनादिष्टान्युक्थ्या
344. 12 इत्येव तानि जानीयान्माध्यंदिनीया एवैनं चमसा निम्नुवन्तो

---

१ एष the MSS.

२ पशुं instead of पशून् M.

३ Thus M G U H Be; एतद्यूपा एवतदस्माकं भवन्त्यथ Ben.

४ Thus Ben (only चरेत् instead of प्रचरेत्); चरेदन्तमेवावभृथः G H, चरेदन्तमेवावभृथः U, चरेदन्तमेनावभृथः Be, प्रचरेदन्तमेवावभृथः M; cp. XXVI. 25 : 308. 3.

५ अपुरीषवती MSS.

यन्तीति[1] । सदस्यासीनं माध्यंदिनीया एवैनं चमसा निष्ट-
II. 344. 13. जन्तो यन्ति अथार्धासंतुर्विंꣳश एष भवति । शुक्रामन्थिनोः
II. 345. 4. सꣳस्रावेणाभिषिञ्चतीति । यजमानायतन आसीनꣳ शुक्रा-
II. 345. 9. मन्थिनोः सꣳस्रावꣳ समानीयाभिषिञ्चति[2] । चतुष्टोम एष
भवति । सप्त हवीꣳषि प्रातःसवनीयाननुवर्तन्त इत्याग्नेयो
ऽष्टाकपालः पौष्णश्चरुः सावित्रो[3] द्वादशकपालस्त्वाष्ट्रो ऽष्टा-
कपालो वारुणो दशकपालो वैश्वदेवश्चरुर्मारुतः सप्तकपाल
II. 346. 4. इत्यष्टौ हवीꣳषि प्रातःसवनीयाननुवर्तन्त इत्याग्नेयो ऽष्टाकपालः
सौम्यश्चरुः सावित्रो[4] द्वादशकपालो बार्हस्पत्यश्चरुरग्नीषोमीय
एकादशकपालः सारस्वतश्चरुर्वारुणो[4] दशकपालो द्यावापृथिव्य
II. 346. 17. एककपाल इति । यत्किंच राजसूयमृतेसोमं तत्सर्वं भव-
तीति । मारुतं चाचैकविंꣳशतिकपालं प्रतिषेधयत्यौपसदा-
II. 347. 14. सेष्टीरर्धचतुर्दशैरेव[5] मासैः संतिष्ठते । यत्किंच राजसूयमनु-
त्तरवेदीकं[6] तत्सर्वं भवतीति । द्विपशुं चाच पशुबन्धं प्रतिषेध-
II. 348. 19. यति[7] चातुर्मास्यानि चार्ध्यर्धनैव[8] मासेन संतिष्ठते । सिꣳहे

---

१ इति om. M Ben U.

२ Thus G H U Be, समवनीया° M, सवनीया° Ben.

३ The words द्वादश° unto सावित्रो (incl., l. 6) are given only by Ben, which, however, reads सावित्रो दशकपा° instead of सा° द्वादश° ।

४ Thus Ben, सावित्रश्च the other MSS.

५ Thus M Ben; °षेधयंत्यौ° Be U H, °षेधयतीत्यौ° G.

६ °वैदिकं all, but cp. T Br. II. 7. 5. 2.

७ Thus Be, °यंति the other MSS.

८ Thus G only; चाध्य° all the other MSS.

.14. व्याघ्र उत या पृदाकाविति । किंदेवत्या उ खल्वियमाहुति-
र्भवतीति । ॥ १० ॥

4. 16 इन्द्राणीदेवतेत्येव[1] ब्रूयात्समदग्निना पशुबन्धेनेष्ट्वोखाः
संभृत्य पशुशीर्षाणि च वायव्येन पशुना यजेतापि वा पुरस्ता-
देव तूष्णीं[2] संभृताः[3] संभृत्य मन्त्रवतीं मृदं संभृत्य तथानु-
56. 8. प्रलिप्य[4] । नियुनक्त्युक्थ्यस्योपयामगृहीतोऽस्यग्नये त्वा बृहद्वते
वयस्वत उक्थायुवे यत्ते अग्ने बृहद्वयस्तस्मै त्वा विष्णवे त्वा
जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरग्नये त्वोक्था-
58. 14. युव इति । नियुनक्ति ध्रुवस्य मूर्धानं दिवो अरतिं पृथिव्या
मघवन्तमृताय जातमग्निम्[5] । कविं सम्राजमतिथिं जनाना-
मासन्ना पात्रं जनयन्त देवाः ॥ उपयामगृहीतोऽसीन्द्राय
त्वा मघवते जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनि-
59. 3. रिन्द्राय त्वा मघवत इति । नियुनक्ति पात्नीवतस्योपयाम-
गृहीतोऽसि बृहस्पतिसुतस्य त इन्दो[6] इन्द्रियावतः पत्नीवन्तं
ग्रहं गृह्णामीन्द्रा३[7] पत्नीवा३ इति । नियुनक्ति हारियोजन-

१ इंद्राग्नी° Ben.

२ तूष्णीमेव M.

३ संभृतां all, but cp. the Vivaraṇa: तूष्णीं संभृता उखा संभृत्य ।

४ Thus M, तथानुप्रपलिप्य Be, तथानूपलिप्य G (sec. m.), तथानुलिप्य Ben H U.

५ जातमिंद्रमग्निं M.

६ Thus M G U. इंद्रो the other MSS.

७ Uncertain; °मींद्रा१र G (sec. m.), °मींद्र्यार Be, °मींद्राआर H °मींद्र्यार U, °मीऽद्राशा - उ Ben, °म्यार M.

स्थोपयामगृहीतोऽसि रोहिदसि रोहिद्योजनो रोह्यो स्वाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्य रोहिद्वन्तं ग्रहं गृह्णामि रोही स्थ रोह्योर्धानाः सहसोमा अग्नये स्वाहेति। योऽग्निष्टुतीन्द्रस्वर्गस्तमुत्सादयेद्य इन्द्रस्तुत्यग्निस्वर्गस्तमुत्सादयेन्नित्या अन्या देवताः। किंदेवत्यानि
II. 360. 10. स्वतिरिक्तस्तोत्राणि भवन्तीत्याश्विनानीत्येव ब्रूयाद्यस्य[1] किंच रात्रिमुपातिरिच्यते सर्वं तदाश्विनमितीन्म्वेकमथापरमाग्नेयं[2] प्रथममैन्द्रं द्वितीयं वैश्वदेवं तृतीयं वैष्णवं चतुर्थमिति।

॥ ३१ ॥ एकोनविंशः ॥

II. 366. 11. स पौष्णस्य जघन्याहःसु प्रजहितेषु[3] यवेष्विति। प्रमृदि-
II. 366. 12. तेष्वित्येवेदमुक्तं[4] भवत्यधिकरणेनेत्येवेदमुक्तं भवत्यृत्विजः[5] पदे-
II. 367. 1. नाक्रापयतीति[6] तत्पूर्वं[7] वेत्यथैनमभ्यज्य पवयित्वोदानयतीति। सिद्धमथाग्निष्टोमिकं कर्म जानीयादोत्तरस्मादुपघातादेतस्मिंश्च काले त्रीणि बर्हींषि यजुषा कुर्याद्दीक्षणीयायाः

१ ०स्वजि M.

२ ०मितीन्म्वेक०, मितीचेक०, मितिन्म्वेक० the MSS.

३ Thus M G (sec. m.) and the Viv.; प्रजितेषु Be, प्रजमितेषु H U G (pr. m.), प्रजमितेषु Ben.; the meaning is, acc. to the Viv., प्रपक्वेषु।

४ प्रमुदिते० Ben.

५ भवतीत्यृत्विजः Ben.

६ पदेना-पयतीति Ben, पदेनाक्रायंतीति Be U, पदेनाक्रयंतीति G, पदेना-क्रयंतीति H, पदेनासौदयपतीति M, but द cancelled.

७ Conjectural reading. तत्पूर्ववत्यथै० Ben G (sec. m), तत्पूर्वंत्वथै० Be H U M G (pr. m.).

प्रायणीयाया आतिथ्याया इत्यथ निर्वपेदुदयनीयां प्रायणी-
यामातिथ्यादाज्येन[१] वर्तयेयावद्रुथा[२] आगच्छेयुः[२] सहनिरुप्त-
माज्यं तिसृषु स्थालीषु विगृह्णीयाद्यां दीक्षणीयायै संख्या[३]
तया[३] दीक्षणीयाꣳ संतिष्ठापयिषेत्प्रणीताभिः प्रायणीयस्य
368. 2. प्रतिपद्येतैव[४] एवातिथ्याया उपक्रमो भवतीति । त्रिवत्सेन
त्रि-माण्डेन वत्सतरेण राजानं क्रीत्वोष्णातित्यं निर्वपतीति । त्रि-
चायणेनेत्येवेदमुक्तं[५] भवति[६] । कथन्तु खल्वस्य मन्त्रानभिनमये
368. 3. चिदसि[७] मनो[८]ऽसि[८] धीरसि दक्षिणो ऽसि यज्ञियो ऽसि
क्षत्रियो ऽस्यदितिरस्युभयतःशिराः[९] स नः सुप्राङ् सुप्रत्यङ्
संभवेत्येकगणा[१०] उपसदो भवन्तीति । पूर्वाह्णिका एवैता उक्ता
368. 13. भवन्ति । खलेवाली यूपो भवतीत्येतामेवैषां[११] मेथीं कुर्वन्ति ।

---

१ ? Thus Be U H. °आमाज्येन G. °आपूपदाज्येन M. Ben utterly corrupt.

२ Thus the Vivaraṇa : all the MSS. are hopelessly corrupt ; G has the least corrupt reading यावद्वसानवेयुः ।

३ Thus M G U Be, संख्याया H. संख्यान Ben.

४ Thus M G U, प्रतिपद्यद्येतैव Be Ben, प्रतिपद्येतेषया H.

५ °चायनेने° MSS. exc. Ben

६ भवतीति MSS. exc. M.

७ °भिसंनमये° G.

८ मनासि MSS. exc. H.

९ Thus Be G U Ben, °शिरो H, °शीर्षासि M.

१० °गुणा MSS.

११ °त्येतवैषां Ben ; are we to correct : °त्येतामेवैषां (iṣā) ? Viv. एतामेव पर्यिकामर्थं कुर्वन्ति ।

स खल्वेवाल्लौ यूपस्तम्बे कटे परमिव षष्टावभाजनं भवतीत्या-
II. 369. 1. कुह[1] इत्येवेदमुक्तं भवत्यथैतान्पशूनुपाकरोत्यग्नीषोमीयमाग्नेय-
मनूबन्ध्यमिति। यमा एवैते छागाः समानयोनयो भवन्ति।
तेषामुक्तं चरणमथाभ्याꣳ संस्क्रियामनुक्रियां परिक्रियामति-
क्रियामवभृथप्रभृत्यसमिते[2] यज्ञपुच्छं। तासां प्रथमैव सरथा[3]
प्रथमा चित्रसोमक्रयणी प्रथमाग्निहोत्रोच्छेषणव्रतायास्याꣳ[4]
संस्क्रियामनुक्रियां परिक्रियामतिक्रियां त्रिस्तनद्विस्तनैक-
स्तनव्रतस्य[5] रूपाणि[5] कुर्वन्ति। क्व[6] तु[6] खल्वेकाहे दृष्टः[7]
संनिवापो भवतीति। व्रात्यस्तोमे चैन्द्राग्न्योश्च कुलाय इत्येव
II. 371. 5. ब्रूयाद्यास्मिन्व्रात्यस्तोमे[8] बहव एकस्मै दीक्षन्ते[9]। ऽदीक्षिता[10]
II. 373. 8. एनमाव्याजयन्ति[10]। दण्डोपानहꣳ[11] ग्रामुखाजिनमिति। ग्रा-

---

१ Thus G M Ben, ०कह U H. ०कुह Be, the Viv. reads चाकुह and details: चाकुतम्यामं विश्लकतम्।

२ Instead of चतिक्रियाम् here and l. 7 the MSS. read चभि०, चवि० or दृति०।

३ Thus corrected; सरथा Be M G, सुरथाः H U, सपथाः Ben

४ Corrected; ०षणा(ह तोमंयास्यां M G U Be, ०षणवततमयास्यां H Ben.

५ Corrected; ०कस्तनव्रतरूपाणि Ben H, ०कहतस्य रू० M Be G U.

६ Thus M G Be U, कच H क Ben

७ दृष्टौ: Ben, दृष्टं Be

८ Thus M Ben, ०चैतस्मिन्व्रा० the other MSS.

९ Thus M G; दीक्षते Be U H, एकस्मिन्दीक्षंते Ben.

१० दीक्षित ... जयति H.

११ ? दंडोपानहं G (sec. m.) Ben, दंडोपानहनं G (sec. m.), दंडोमन-हनं Be, दंडोपनहन H, दंडोपिनहनं M

मुञ्जकानामु[१]ह दर्भमिश्राः[२] कम्बला भवन्ति स च भवति[३]
श्वेतं[४] चौरभ्राजिनम्[५] । ॥ ३२ ॥
4.3.4 स एष[६] ज्येष्ठानामग्निष्टोम । एष एव सर्व्कनीयसामुक्थ्य-
186.6. श्चतुष्टोमं पूर्वमहर्भवति पञ्चस्तोममुत्तरꣳ[७] । रथो[७] हविर्धानं ।
186.8 कुर्यात्तत्स्वरूपमुत्तरं हविर्धानमुत्सौदेयुः शकटमन्त्रा । द्वौ चय-
स्त्रिꣳशौ मध्यत स्तोमौ भवत इति । पृष्ठ्यस्तोमावेवैतावित-
स्थामुतश्च[८] प्रतिलोमौ[८] भवतो । ऽथामात्रास्थायां[९] प्रतिसमस्य
83.10 चान्द्रमसं पिण्डपितृयज्ञं दद्यात्तं ब्रह्मणः सन्तं पर्युपविश्य
भक्षयन्ति यद्हुतं मन्यन्ते तेन ब्राह्मणं । ब्राह्मणो वै वर्णानाꣳ
श्रेष्ठो[१०] ऽग्निर्देवानामित्येतेन वा भक्षयेदपि वा व्याहृतीभि-
183.12. श्चतुष्टोम एष भवतीति[११] चतुरुत्तरीय[१२] एष[१३] दिशां चतु-

१ Thus M Be and Viv.: ञ्चामुञ्जाका० the other MSS.

२ Corrected according to the Viv . दर्भमिश्रा M G (sec. m.). दर्भमि Ben, मर्दभमिश्रा Be U H.

३ भवंति MSS .

४ श्वेता MSS

५ चोर० Ben (च चौरभ-चजिनम् ?)

६ एष Ben and Viv : एव the other MSS

७ Thus M only , ०मुत्तरमथो the other MSS

८ Thus M G (sec. m ) Be Ben : ०तश्चाप्रति० U H G (pr. m.).

९ Refers acc. to the Vivaraṇa to the सूत्र (XVIII, 37 ).

१० Thus M Ben. ज्येष्ठो G U Be H

११ Ben om. इति, rightly ?

१२ Corrected : ०रतौयादेष M G U Be. ०रतौयाश्च H. ०त्तरायावद्य Ben.

II 392. 6. ष्टोमो भवत्यथास्मिन्कामानाम्नयन्ते[1] ऽवभृथप्रभृत्यस्तमिते यज्ञ-
II. 395. 8. पुच्छं । तस्य द्रप्सस्तु बहिष्पवमानः शते सहस्रे ऽयुते नियुते प्रयुते[2]
ऽर्बुदे न्यर्बुदे समुद्रे मध्ये ऽन्ते परार्धे पद्वे[3] पद्मे नित्यमुक्ता[4]
मनसैव स्तुवानो मन्यत एतावति[5] मे[5] स्तुतमित्यथ सत्प्रवर्ग्यं
II. 405. 18. एकमेवाग्निष्टोममथास्मिञ्छुनस्कर्णयज्ञे । तिलमिश्रमश्नित्वा म-
ध्वाज्यमादित्वा[6] चारमाचं[7] पिबेदथ सामपथे संविशेत्स्वप्नादेव
II. 406. 8. स्वर्गे गच्छति । राग्निशतं[8] धान्यं ददाति सरायशतं धान्यं
II. 407. 4. ददातीति । मूतशतमित्येवेदमुक्तं भवति । प्रचरन्ति प्राञ्चः
प्रत्यञ्चः प्रचरन्तीति ॥ यः प्रत्यङ् विहारो दक्षिणतउपचार
एष भवत्येतेनैवापि सर्वतोमुखो व्याख्यात । एतेन सहस्र-
शाखो । ऽथैनमिह[9] पचयित्वामुत्र पचयन्तीति[10] । सिद्धमच-

१ कामांच• (or कामांद• ?) M.

२ Om. G U.

३ पद्वे G U Ben and probably also M ; पद्म Be, द्वे H ; are we to correct here and XVIII. 43. पद्मे ?

४ Thus Ben : नित्यमुख्या the other MSS.

५ Thus M G U ; एतावतिमेव H, एतावतीमे Be, एतावतीमेव Ben.

६ •स्वादित्वा H.

७ Thus G U : •माच M, चारमाच H, चरमच Ben, मचारमाचं Be.

८ राशी• G Be U H.

९ Conjectural reading. वैनमिच MSS ( वैरमङ्गच M ). I have not been able to point out the passage in the text proper here referred to.

१० •चतीति G (sec. m.) Be.

12 1. ग्निष्टोमिकं कर्म आनीयादुत्तरस्यैव[1] मासाये[।] स द्वौ चिरात्रौ[2] कुर्वत एकं च द्विरात्रमिति[3] । द्वौचोपसद्भिरेवास्यैतान्यहान्यभिविधत्ते । ऽहीनविधो[4] ऽति यज्ञं दद्यात्तदिदं[4] प्रोक्तं यदक्तृप्तं सूचत: । सामयिकं त्वेव क्रतुयोगं[5] यज्ञे यज्ञमुपलक्षयेतेति बौधायनो यज्ञे यज्ञमुपलक्षयेतेति बौधायन: । ॥

३३ ॥ विंशः ॥

॥ इति षड्विंशः प्रश्नः ॥

। कर्मान्तं समाप्तम् ।

---

१ Thus the MSS.: read °हुत्तरस्यै च ?

२ द्विरात्रौ G U.

३ चिरा° MSS. exc. M.

४...४ Wholly uncertain. °हौनविधोतिवज्ञदद्यात्तदिदं G. हौनविधोतियज्ञं दद्यात्तदिदं U. हौनविधोतियज्ञदद्यात्तदिदं Ben Be. हौनविधातियज्ञं दद्यातीदं H, हौनविधोनियज्ञं दद्यात्तदिदं M. The Viv. seems to point, at least also to the reading यज्ञं दद्यात् ।

५ Thus M G U H, क्रतुवेधं Be, क्रतुवेधन Ben

# प्रायश्चित्तसूत्रम् ॥

अथातो मन्त्रगणाम्नातानि प्रायश्चित्तानि व्याख्यास्यामः । सर्वत्रोपरिष्टान्मन्त्रकृतं यद्यधस्ताद्विपतेद्ब्रह्म प्रतिष्ठा मनस इत्येतया प्रतिष्ठाप्यैतयैव स्रुवाहुतिं जुहुयाद्धुत्वा वा[1] प्रतिष्ठापयेद्धुत्वानन्तरं[2] कर्म कुर्यादेवमन्येष्वप्यतिक्रान्तं कर्म नाद्रियेत यद्यर्थलुप्तं भवति । सर्वत्राश्रावितप्रत्याश्रावितवषट्काराणामयुक्तानुकृतीनेष्वाश्रावितमत्याश्रावितमित्येतया स्रुवाहुतिं जुहुयात्सर्वत्र देवोच्चारणेषु[3] भागिनीं देवतामनुच्चारयित्वा[4] योन्यामुच्चारयेद्यद्वो देवा अतिपादयानीत्येतया स्रुवाहुतिं जुहुयात्सर्वत्र देवतावाहनेषु भागिनीं देवतामनावाहयित्वा योन्यामावाहयेदेतयैव स्रुवाहुतिं जुहुयाद्यच्च स्मरेत्तदुपोत्थायैनां मनसावाहयेद्यातिरिक्तामाज्येन यथोक्तां यजेत । सर्वत्र प्रणीतानां प्रणीयमानानां प्रणीतानां[5] वा यदि[6] विप्रुषो[6] विपतेयुः[6] स्रवेद्वा चमस[7] आपो[7] हि ष्ठा मयोभुव इति तिसृभिरद्भिः पूरयित्वा ततं म आपस्तदु तायते पुनरित्ये-

१ Om. H

२ Thus H U C' B Viv., हुत्वावानन्तरं Tr.

३ Thus H U B. देवतोच्चरणेषु C, ॰च्चारणे Tr.

४ देवतामुच्चा॰ B.

५ प्रविच्छितानां H B.

६ Thus Tr., विप्रुषो यदि पतेयुः the other MSS.

७ Thus C' H, चमसं चापो U. चमसमापो B. चमसामापो Tr.

